बाहुभिः परिघाकारैः कृष्य तां धनुषां शराः ॥ भक्ष्यमेषु विविशुस्तडागानीव पक्षिणः ॥ २१ ॥ मृताः स्थ क्व नु यास्यध्वं हनिष्यामो निवर्तताम् ॥ इत्येवं परुषाण्युक्त्वा दानवाः पार्षदर्षभान् ॥ २२ ॥ बिभिदुः सायकैस्तीक्ष्णैः सूर्यपादा इवाम्बुदान् ॥ प्रमथा अपि सिंहाक्षाः सिंहविक्रान्तविक्रमाः ॥ खण्डशैलशिलावृक्षैर्बिभिदुर्दैत्यदानवान् ॥ २३ ॥ अम्बुदैराकुलमिव हंसाकुलमिवाम्बरम् ॥ दानवाकुलमित्यर्थं तत्पुरं सकलं बभौ ॥ २४ ॥ विकृष्टचापा दैत्येन्द्राः सृजन्ति शरदुर्दिनम् ॥ इन्द्रचापाङ्कितोरस्का जलदा इव दुर्दिनम् ॥ २५ ॥ इषुभिस्ताड्यमानास्ते भूयो भूयो गणेश्वराः ॥ चक्रुस्ते देहनिर्यासं स्वर्णधातुमिवाचलाः ॥ २६ ॥ यथा वृक्षशिलावज्रशूलपट्टिशरश्वधैः ॥ चूर्ण्यन्तेऽभिहता दैत्याः काचाष्टङ्कहता इव ॥ २७ ॥ चन्द्रोदयात्समुद्धूतः पौर्णमास इवार्णवः ॥ त्रिपुरं प्रभवत्तद्वद्भीमरूपमहासुरैः ॥ २८ ॥ तारकाख्यो जयत्येष इति दैत्या अघोषयन् ॥ जयतीन्द्रश्च रुद्रश्च इत्येव च गणेश्वराः ॥ ३९ ॥ वारिता दारिता बाणैर्योधास्तस्मिन्बलोभये ॥ निःस्वनन्तोऽम्बुसमये जलगर्भा इवाम्बुदाः ॥ ४० ॥ करैश्छिन्नैः शिरोभिश्च ध्वजैश्छत्रैश्च पाण्डुरैः ॥ युद्धभूमिर्भयवती मांसशोणितपूरिता ॥ ४१ ॥ व्योम्नि चोत्पत्य सहसा तालमात्रं वरायुधैः ॥ दृढाहताः पतन्पूर्वं दानवाः प्रमथास्तथा ॥ ४२ ॥ सिद्धाश्चाप्सरसश्चैव चारणाश्च नभोगताः ॥ हृष्टा हाहारवक्षिताः साधु साध्विति चक्रुशुः ॥ ४३ ॥ अनाहताश्च वियति देवदुन्दुभयस्तथा ॥ नदन्तो मेघशब्देन सरमा इव रोषिताः ॥ ४४ ॥ ते तस्मिंस्त्रिपुरे दैत्या नद्यः सिंधुपताविव ॥ विशन्ति क्रुद्धवदना वल्मीकमिव पन्नगाः ॥ ४५ ॥ तारकाख्यपुरे तस्मिन् सुराः शूराः समन्ततः ॥ तदाला निपतन्ति स्म सपक्षा इव भूधराः ॥ ४६ ॥ योधयन्ति त्रिभागेन त्रिपुरे तु गणेश्वराः ॥ विद्युन्माली मयश्चैव मग्नो च द्रुमवद्रणे ॥ ४७ ॥ विद्युन्माली स दैत्येन्द्रो गिरीन्द्रसदृशद्युतिः ॥ आदाय परिघं घोरं ताडयामास नन्दिनम् ॥ ४८ ॥ स नंदी दानवेंद्रेण परिघेण दृढाहतः ॥ भ्रमते मधुना व्यक्तः पुरा नारायणो यथा ॥ ४९ ॥ नन्दीश्वरे गते तत्र गणपाः ख्यातविक्रमाः ॥ दुद्रुवुर्जातसंरम्भा विद्युन्मालिनमासुरम् ॥ ५० ॥ घण्टाकर्णः शङ्कुकर्णो महाकालश्च पार्षदाः ॥ ततश्च सायकैः सर्वान्गणपान्गणपाकृतीन् ॥ ५१ ॥ भूयो भूयः स विव्याध गणेश्वरमहत्तमान् ॥ भित्त्वा भित्त्वा रुरावोच्चैर्नभस्यम्बुधरो यथा ॥ ५२ ॥ तस्यारम्भितशब्देन नंदी दिनकरप्रभः ॥ संज्ञां लभ्य

ततः सोऽपि विद्युन्मालिनमाद्रवत् ॥ ५३ ॥ रुद्रदत्तं तदा दीप्तं दीप्तानलसमप्रभम् ॥ वज्रं वज्रनिभाङ्गस्य दानवस्य ससर्ज्ज ह ॥ ५४ ॥ तं नंदिभुजनिर्मुक्तं मुक्ताफलविभूषितम् ॥ पपात वक्षसि तदा वज्रं दैत्यस्य भीषणम् ॥५५॥ स वज्रनिहतो दैत्यो वज्रसंहननोपमः॥ पपात वज्राभिहतः शक्रेणाद्रिरिवाहतः ॥ ५६ ॥ दैत्येश्वरं विनिहतं नंदिना कुलनन्दिना ॥ चुकुशुर्दानवाः प्रेक्ष्य दुद्रुवुश्च गणाधिपाः ॥५७॥ दुःखामर्षितरोषास्ते विद्युन्मालिनि पातिते ॥ द्रुमशैलमहावृष्टिं पयोदाः ससृजुर्यथा॥५८॥ ते पीड्यमाना गुरुभिर्गिरिभिश्च गणेश्वराः॥ कर्त्तव्यं न विदुः किंचिद्धन्य माधार्मिका इव ॥५९॥ ततोऽसुरवरः श्रीमांस्तारकाख्यः प्रतापवान् ॥ स तरूणां गिरीणां वै तुल्यरूपवरो बभौ ॥६०॥ भिन्नोत्तमाङ्गा गणपा भिन्नपादाङ्कितााननाः ॥ विरेजुर्भुजगा मन्त्रैर्वार्यमाणा यथा तथा ॥६१॥ मयेन मायावीर्येण वध्यमाना गणेश्वराः ॥ भ्रमन्ति बहुशब्दालाः पञ्जरे शकुना इव ॥ ६२ ॥ तथाऽसुरवरः श्रीमांस्तारकाख्यः प्रतापवान् ॥ ददाह च बलं सर्वं शुष्केन्धनमिवानलः ॥ ६३ ॥ तारकाख्येण वार्यंते शरवर्षैस्तदा गणाः ॥ मयेन मायानिहतास्तारकाख्येण चेषुभिः ॥६४॥ गणेशा विधुरा जाता जीर्णमूला तथा द्रुमाः ॥ ६५ ॥ भूयः सम्पतते चाग्निर्ग्रहान् ग्राहान् भुजङ्गमान् ॥ गिरीन्द्रांश्च हरीन्व्याघ्रान्वृक्षान्सृमर वर्णकान् ॥६६॥ शरभानष्टपादांश्च आपः पवनमेव च ॥ मयो मायाबलेनैव पातयत्येव शत्रुषु ॥ ६७ ॥ ते तारकाख्येण मयेन मायया संमुह्यमाना विवशा गणेश्वराः ॥ न शक्नुवंस्ते मनसापि चेष्टितुं यथेन्द्रियार्था मुनिनाभिसंयताः ॥ ६८ ॥ महाजलाग्न्यादिसकुञ्जरोरगैर्हरीन्द्रव्याघ्रर्क्षतरक्षुराक्षसैः ॥ विबाध्यमानास्तमसा विमोहिताः समुद्रमध्येष्विव गाधकाङ्क्षिणः ॥ ६९ ॥ संमर्द्यमानेषु गणेश्वरेषु संनर्द्यमानेषु सुरेतरेषु ॥ ततः सुराणां प्रवराभिरक्षितुं रिपोर्बलं संविविशुः सहायुधाः ॥ ७० ॥ यमो गदास्त्रो वरुणश्च भास्करस्तथा कुमारोऽमरकोटिसंवृतः ॥ स्वयं च शक्रः सितनागवाहनः कुलीशपाणिः सुरलोकपुङ्गवः ॥ ७१ ॥ स चोडुनाथः ससुतो दिवाकरः स सान्तकश्चयक्षपतिर्महाद्युतिः ॥ एते रिपूणां प्रबलाभिरक्षितं तदा बलं संविविशुर्मदोद्धताः ॥ ७२ ॥ यथा वनं दर्पितकुञ्जराधिपा यथा नभः साम्बुधरं दिवाकरः ॥ यथा च सिंहैर्विजनेषु गोकुलं तथा बलं तत्त्रिदशैरभिद्रुतम् ॥ ७३ ॥ कृतप्रहारातुरदीनदानवं ततस्त्वभज्यन्त बलं हि पार्षदाः ॥ स्वर्ज्योतिषां ज्योतिरिवोष्मवान् हरिर्यथा तमो घोरतरं नराणाम् ॥७४॥ विश्रान्तयामास यथा सदैव

निशाकरः सञ्चितशार्वरं तमः ॥ ततोपकृष्टे च तमःप्रभावे अभ्रप्रभावे च विवर्द्धमाने॥७५॥दिग्लोकपालैर्गणनायकैश्च कृतो महान् सिंहरवो मुहूर्त्तम्॥ संख्ये विभग्ना विकरा विपादाश्छिन्नोत्तमाङ्गाः शरपूरिताङ्गाः ॥ ७६॥ देवेतरा देववरैर्विभिन्नाः सीदन्ति पङ्केषु यथा गजेन्द्राः॥वज्रेण भीमेन च वज्रपाणिः शक्त्या च शक्त्या च मयूरकेतुः ॥७७॥ दण्डेन चोग्रेण च धर्म्मराजः पाशेन चोग्रेण च वारिगोप्ता ॥ शूलेन कालेन च यक्षराजो वीर्येण तेजस्वितया सुकेशः ॥ ७८ ॥ गणेश्वरास्ते सुरसन्निकाशाः पूर्णाहुतीसिक्तशिखिप्रकाशाः ॥ उत्सादयन्ते दनुपुत्रवृन्दान्यथैव इन्द्राशनयः पतन्त्यः ॥ ७९ ॥ मयस्तु देवान्परिरक्षितारमुमात्मजं देववरं कुमारम् ॥ शरेण भित्त्वा स हि तारकासुतं स तारकाख्यासुरमा बभाषे ॥ ८० ॥ कृत्वा प्रहारं प्रविशामि वीरं पुरं हि दैत्येन्द्र बलेन युक्तः ॥ विश्राममूर्जस्करमप्यवाप्य पुनः करिष्यामि रणं प्रपन्नैः ॥ ८१॥ वयं हि शस्त्रक्षतविक्षिताङ्गा विशीर्णशस्त्रध्वजवर्म्मवाहाः ॥ जयैषिणस्ते जयकाशिनश्च गणेश्वरा लोकवराधिपाश्च ॥ ८२ ॥ मयस्य श्रुत्वा दिवि तारकाख्यो वचोऽभिकाङ्क्षन्क्षतजोपमाक्षः ॥ विवेश तूर्णं त्रिपुरं दितेः सुतैः सुतैरदित्या युधि वृद्धहर्षैः ॥ ८३ ॥ ततः सशङ्खानक भेरिभीमं ससिंहनादं हरसैन्यमाबभौ ॥ मयानुगं घोरगभीरगह्वरं यथा हिमाद्रेर्गजसिंहनादितम् ॥ ८४ ॥ इति श्रीमात्स्ये महापुराणे त्रिपुर दाहे प्रहारकृतं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ सूत उवाच ॥ मयः प्रहारं कृत्वा तु मायावी दानवर्षभः ॥ विवेश तूर्णं त्रिपुरमभ्रं नीलमिवाम्बरम् ॥ १ ॥ स दीर्घमुष्णं निःश्वस्य दानवान्वीक्ष्य मध्यगान् ॥ दध्यौ लोकक्षये प्राप्ते कालं काल इवापरः ॥ २ ॥ इन्द्रोऽपि बिभ्यते यस्य स्थितो युद्धेष्वग्रतः ॥ स चापि निधनं प्राप्तो विद्युन्माली महायशाः ॥ ३ ॥ दुर्गं वै त्रिपुरस्यास्य न समं विद्यते पुरम् ॥ तस्याप्येषोऽनयः प्राप्तो न दुर्गं कारणं क्वचित् ॥ ४ ॥ कालस्यैव वशे सर्वं दुर्गं दुर्गतरं च यत् ॥ काले क्रुद्धे कथं कालात्त्राणं नोऽद्य भविष्याति ॥ ५ ॥ लोकेषु त्रिषु यत्किञ्चिद्बलं वै सर्वजन्तुषु ॥ कालस्य तद्वशं सर्वमिति पैतामहो विधिः ॥ ६ ॥ अस्मिन्कः प्रभवे द्योगो ह्यसन्धार्येऽमितात्मनि ॥ लङ्घने कः समर्थः स्याद्दते देवं महेश्वरम् ॥ ७ ॥ बिभेमि नेन्द्राद्धि यमाद्वरुणान्न च वित्तपात् ॥ स्वामी चैषां तु देवानां दुर्जयः समहेश्वरः ॥ ८ ॥ ऐश्वर्यस्य फलं यत्तत्प्रभुत्वस्य च यत्फलम् ॥ तदद्य दर्शयिष्यामि यावद्वीराः समन्ततः ॥ ९ ॥

वापीममृततोयेन पूर्णां स्रक्ष्ये वरौषधीः ॥ जीविष्यन्ति तदा दैत्याः सञ्जीवनवरौषधैः ॥ १० ॥ इति सञ्चित्य बलवान्मयो मायाविनां वरः ॥ मायया ससृजे वापीं रम्भामिव पितामहः ॥ ११ ॥ द्वियोजनायतां दीर्घां पूर्णयोजनविस्तृताम् ॥ आरोहसंक्रमवतीं चित्ररूपां कथामिव ॥ १२ ॥ इन्दोः किरणकल्पेन मृष्टेनामृतगन्धिना ॥ पूर्णां परमतोयेन गुणपूर्णामिवाङ्गनाम् ॥ १३ ॥ उत्पलैः कुमुदैः पद्मैर्वृतां कादम्बकैस्तथा ॥ चन्द्रभास्करवर्णाभैर्भीमैरावरणैर्वृताम् ॥ १४ ॥ खगैर्मधुररावैश्च चारुचामीकरप्रभैः ॥ कामैषिभिरिवाकीर्णां जीवानामरणीमिव ॥ १५ ॥ तं वापीं सृज्य स मयो गङ्गामिव महेश्वरः ॥ तस्यां प्रक्षालयामास विद्युन्मालिनमादितः ॥ १६ ॥ स वाप्यां मज्जितो दैत्यो देवशत्रुर्महाबलः ॥ उत्तस्थाविन्धनैरिद्धः सद्यो हुत इवानलः ॥ १७ ॥ मयस्य चाञ्जलिं कृत्वा तारकाख्योऽभिवादितः ॥ विद्युन्मालीति वचनं मयमुत्थाय चाब्रवीत् ॥ १८ ॥ क्व नन्दी सह रुद्रेण वृतः प्रमथजम्बुकैः ॥ युध्यामोऽरीन्विनिष्पीड्य दया देहेषु का हि नः ॥ १९ ॥ अन्वास्येव च रुद्रस्य भग्नाः प्रभविष्णवः ॥ तैर्वा विनिहता युद्धे भविष्यामो यमाशनाः ॥२०॥ विद्युन्मालेर्निशम्यैतन्मयो वचनमूर्जितम् ॥ तं परिष्वज्य साद्राक्ष इदमाह महासुरः ॥ २१ ॥ विद्युन्मालिन्न मे राज्यमभिप्रेतं न जीवितम् ॥ त्वया विना महाबाहो किमन्येन महासुर ॥ २२ ॥ महामृतमयी वापी ह्येषा मायाभिरीश्वर ॥ सृष्टा दानवदैत्यानां हतानां जीववर्द्धिनी॥२३॥ दिष्ट्या त्वां दैत्य पश्यामि यमलोकादिहागतम्॥दुर्गतावनयग्रस्तं भोक्ष्यामोऽद्य महीनिधिम् ॥ २४ ॥ दृष्ट्वा दृष्ट्वा च तां वापीं मायया मयनिर्मिताम् ॥ हृष्टाननाक्षा दैत्येन्द्रा इदं वचनमब्रुवन् ॥ २५ ॥ दानवा युध्यतेदानीं प्रमथैः सह निर्भयाः ॥ मयेन निर्मिता वापी हतान् सञ्जीवयिष्यति ॥ २६ ॥ ततः क्षुब्धाम्बुधिनिभा भेरी सा तु भयङ्करी ॥ वाद्यमाना ननादोच्चै रौरवी सा पुनः पुनः ॥ २७ ॥ श्रुत्वा भेरीरवं घोरं मेघारम्भितसन्निभम् ॥ न्यपतन्नसुरास्तूर्णं त्रिपुराद्युद्धलालसाः ॥ २८ ॥ लोहराजतसौवर्णैः कटकैर्मणिराजितैः ॥ आमुक्तैः कुण्डलैर्हारैर्मुकुटैरपि चोत्कटैः ॥ २९ ॥ धूमायिता ह्यविरमा ज्वलन्त इव पावकाः ॥ आयुधानि समादाय काशिनो दृढविक्रमाः ॥३०॥ नृत्यमाना इव नटा गर्जन्त इव तोयदाः ॥ करोच्छ्रया इव गजाः सिंहा इव च निर्भयाः॥३१॥ हृदा इव च गम्भीराः सूर्या इव प्रतापिताः ॥ द्रुमा इव च दैत्येन्द्रास्त्रासयन्तो बलं महत् ॥३२॥ प्रमथा अपि सोत्साहा गरुडो

त्पातपातिनः ॥ युयुत्सवोऽभ्यधावन्ति दानवान् दानवारयः ॥ ३३ ॥ नन्दीश्वरेण प्रमथास्तारकाख्येण दानवाः ॥ चक्रुः संहत्य संग्रामं चोद्य माना बलेन च ॥ ३४ ॥ तेऽसिभिश्चन्द्रसङ्काशैः शूलैश्चानलपिङ्गलैः ॥ बाणैश्च दृढनिर्मुक्तैराभिजघ्नुः परस्परम् ॥ ३५ ॥ शराणां सृज्यमा नानामसीनां च निपात्यताम् ॥ रूपाण्यासन् महोल्कानां पतन्तीनामिवाम्बरात् ॥ ३६ ॥ शक्तिभिर्भिन्नहृदया निर्दया इव पातिताः ॥ निरये ष्विव निर्मग्नाः कूजन्ते प्रमथासुराः॥३७॥ हेमकुण्डलयुक्तानि किरीटोत्कटवन्ति च ॥ शिरांस्युर्व्यां पतन्ति स्म गिरिकूटानिवात्यये ॥३८॥ परश्वधैः पट्टिशैश्च खड्गैश्च परिघैस्तथा ॥ छिन्नाः करिवराकारा निपेतुस्ते धरातले ॥ ३९ ॥ गर्जन्ति सहसा हृष्टाः प्रमथा भीम गर्जनाः ॥ साधयन्त्यपरे सिद्धा युद्धगान्धर्वमद्भुतम् ॥४० ॥ बलवान् भाति प्रमथ दर्पितो भाति दानव ॥ इति चोच्चारयन् वाचं वारणा रण धूर्गताः ॥ ४१ ॥ परिघैराहताः केचिद्दानवैः शङ्कुतानुगाः ॥ वमन्ते रुधिरं वक्त्रैः स्वर्णधातुमिवाचलाः ॥ ४२ ॥ प्रमथैरपि नाराचैरसुराः सुरशत्रवः ॥ द्रुमैश्च गिरिशृङ्गैश्च गाढमेवाहवे हताः ॥ ४३ ॥ मृदितानथ तान्दैत्यानन्ये दानवपुङ्गवाः ॥ उत्क्षिप्य चिक्षिपुर्वाप्यां मयदानव चोदिताः ॥ ४४ ॥ ते चापि भास्वरैर्देहैः स्वर्गलोक इवामराः ॥ उत्तस्थुर्वापीमासाद्य सद्रूपाभरणाम्बराः ॥ ४५ ॥ अथैके दानवाः प्राप्य वापीप्रक्षेपणादसून् ॥ आस्फोट्य सिंहनादं च कृत्वाधावंस्तथाऽसुराः ॥ ४६ ॥ दानवाः प्रमथानेतान्प्रसर्पेत किमासथ ॥ हतानपि हि वो वापी पुनरुज्जीवयिष्यति ॥ ४७ ॥ एवं श्रुत्वा शङ्कुकर्णो वचोऽभ्रग्रहसन्निभः ॥ द्रुतमेवैत्य देवेशमिदं वचनमब्रवीत् ॥ ४८ ॥ मृदिताः मृदिता देव प्रमथैरसुरा ह्यमी ॥ उत्तिष्ठन्ति पुनर्भीमाः सस्या इव जलोक्षिताः ॥ ४९ ॥ अस्मिन् किल पुरे वापी पूर्णामृतरसाम्भसा ॥ निहता निहता यत्र क्षिप्ता जीवन्ति दानवाः ॥ ५० ॥ इति विज्ञापयद्देवं शङ्कुकर्णो महेश्वरम्॥अभवन्दानवबल उत्पाता वै सुदारुणाः ॥५१ ॥ तारकाख्यः सुभीमाक्षो दारितास्यो हरिर्यथा ॥ अभ्यधावत्सुसंक्रुद्धो महादेवरथं प्रति ॥ ५२ ॥ त्रिपुरे तु महान्घोरो भेरीशङ्खरवो बभौ ॥ दानवा निःसृता दृष्ट्वा देवदेवरथे सुरम् ॥ ५३ ॥ भूकम्पश्चाभवत्तत्र शताङ्गो भूगतोऽभवत् ॥ दृष्ट्वा क्षोभमगाद्रुद्रः स्वयम्भूश्च पिता महः ॥ ५४ ॥ ताभ्यां देववरिष्ठाभ्यामन्वितः स रथोत्तमः ॥ अनायतनमासाद्य सीदते गुणवानिव ॥ ५५ ॥ धातुक्षये देह इव ग्रीष्मे चाल्प

मिवोदकम्॥ शैथिल्यं याति स रथः स्नेहो विप्रकृतो यथा॥५६॥ रथादुत्पत्यात्म भूर्वै सीदन्तं तु रथोत्तमम्॥ उज्जहार महाप्राणो रथं त्रैलोक्य-रूपिणम् ॥ ५७ ॥ तदा शराद्विनिष्पत्य पीतवासा जनार्द्दनः ॥ वृषरूपं महत्कृत्वा रथं जग्राह दुर्द्धरम् ॥ ५८ ॥ स विषाणाभ्यां त्रैलोक्यं रथमेव महारथ॥ प्रगृह्योद्वहते सज्जं कुलं कुलवहो यथा॥५९॥ तारकाख्योऽपि दैत्येन्द्रो गिरीन्द्र इव पक्षवान् ॥ अभ्यद्रवत्तदा देवं ब्रह्माणं हतवांश्च सः ॥ ६० ॥ स तारकाख्याभिहतः प्रतोदं न्यस्य कूबरे ॥ विजज्वाल मुहुर्ब्रह्मा श्वासं वक्त्रात्समुद्गिरन् ॥ ६१ ॥ तत्र दैत्यैर्महानादो दानवैरपि भैरवः ॥ तारकाख्यस्य पूजार्थं कृतो जलधरोपमः ॥ ६२ ॥ रथचरणकरोऽथ महामृधे वृषभवपुर्वृषभेन्द्रपूजितः ॥ दितितनयबलं विमर्द्य सर्वं त्रिपुरपुरं प्रविवेश केशवः ॥ ६३ ॥ सजलजलदराजितां समस्तां कुमुदवरोत्पलफुल्लपङ्कजाढ्याम् ॥ सुरगुरुरपिबत् पयोऽमृतं तद्रविरिव संचितशार्वरं तमोऽन्धम् ॥ ६४ ॥ वापीं पीत्वासुरेन्द्राणां पीतवासा जनार्द्दनः ॥ नर्द्दमानो महाबाहुः प्रविवेश शरं ततः ॥ ६५ ॥ ततोऽसुरा भीमगणेश्वरैर्हताः प्रहारसंवार्द्धितशोणितापगाः ॥ पराङ्मुखा भीममुखैः कृता रणे यथा नयाभ्युद्यततत्परैर्नरैः ॥ ६६ ॥ स तारकाख्यस्तडिमालिरेव च मयेन सार्द्धं प्रमथैरभिद्रुताः ॥ पुरं परावृत्य नु ते शरार्द्दिता यथा शरीरं पवनोदये गताः ॥ ६७ ॥ गणेश्वराभ्युद्यतदर्पकाशिनो महेन्द्रनन्दीश्वरषण्मुखा युधि ॥ विनेदुरुच्चैर्जहसुश्च दुर्म्मदा जयेम चन्द्रादिदिगीश्वरैः सह ॥ ६८ ॥ ॥ इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ छ ॥ सूत उवाच ॥ प्रमथैः समरे भिन्नास्त्रैपुरास्ते सुरारयः ॥ पुरं प्रविविशुर्भीताः प्रमथैर्भग्नगोपुरम् ॥ १ ॥ शीर्णदंष्ट्रा यथा नागा भग्नशृङ्गा यथा वृषाः ॥ यथा विपक्षाः शकुना नद्यः क्षीणोदका यथा ॥ २ ॥ मृतप्रायास्तथा दैत्य दैवतैर्विकृताननाः ॥ बभूवुस्ते विमनसः कथं कार्य्यमिति ब्रुवन् ॥ ३ ॥ अथ तान्म्लानमनसस्तदा तामरसाननः ॥ उवाच दैत्यो दैत्यानां परमाधिपतिर्मयः ॥ ४ ॥ कृत्वा युद्धानि घोराणि प्रमथैः सह सामरैः ॥ तोषयित्वा तथा युद्धे प्रमथानमरैः सह ॥ ५ ॥ यूयं यत्प्रथमं दैत्याः पश्चाच्च बलपीडिताः ॥ प्रविष्टा नगरं त्रासात्प्रमथैर्भृशमर्द्दिताः ॥ ६ ॥ अप्रियं क्रियते व्यक्तं दैवैर्नास्त्यत्र संशयः ॥ यत्र नाम महाभागाः प्रविशन्ति गिरेर्वनम् ॥ ७ ॥ अहो हि कालस्य बलमहो कालो हि दुर्ज्जयः ॥ यत्रैदृशस्य दुर्गस्य उपरोधोऽयमागतः ॥ ८ ॥ मये विवद

माने तु नर्दमान इवाम्बुदे ॥ बभूवुर्निष्प्रभा दैत्या ग्रहा इन्दूदये यथा ॥ ९ ॥ वापीपालास्ततोऽभ्येत्य नभःकाल इवाम्बुदाः ॥ मयमाहुर्यं म-
प्रख्यं साञ्जलिप्रग्रहाः स्थिताः ॥ १० ॥ या सामृतरसा मूढा वापी वै निर्मिता त्वया ॥ समाकुलोत्पलवना समीनाकुलपङ्कजा ॥ ११ ॥
पीता सा वृषरूपेण केनचिद्दैत्यनायक ॥ वापी सा साम्प्रतं दृष्टाऽमृतसंज्ञा इवाङ्गना ॥ १२ ॥ वापीपालवचः श्रुत्वा मयोऽसौ दानवप्रभुः ॥
कष्टमित्यसकृत्प्रोच्य दितिजानिदमब्रवीत् ॥ १३ ॥ मया मायाबलकृता वापी पीता त्वियं यदि ॥ विनष्टाः स्म न
सन्देहस्त्रिपुरं दानवा गतम् ॥ १४ ॥ निहतान्निहतान्दैत्यानाजीवयाति दैवतैः ॥ पीता वा यदि वा वापी पीता वै पीतवाससा ॥ १५ ॥
कोऽन्यो मन्मायया गुप्तां वापीममृततोयिनीम् ॥ पास्यते विष्णुमजितं वर्जयित्वा गदाधरम् ॥ १६ ॥ सुगुह्यमपि दैत्यानां
नास्त्यस्याविदितं भुवि ॥ यत्र मद्गरकौशल्यं विज्ञातं न वृतं बुधैः ॥ १७ ॥ समोऽयं रुचिरो देशो निर्द्रुमो निर्द्रुमाचलः ॥ लभेमं दूरतः
कृत्वा बाधन्तेऽस्मान्गणामराः ॥ १८ ॥ ते यूयं यदि मन्यध्वं सागरोपरिधिष्ठिताः ॥ प्रमथानां महावेगं सहामः श्वसनोपमम् ॥ १९ ॥ एतेषां
च समारम्भास्तस्मिन् सागरसंप्लुवे ॥ निरुत्साहा भविष्यंति एतद्रथपथावृताः ॥ २० ॥ युध्यतां निघ्नतां शत्रून् भीतानां च द्रविष्यताम् ॥
सागरोऽम्बरसङ्काशः शरणं नो भविष्यति ॥ २१ ॥ इत्युक्त्वा स मयो दैत्यो दैत्यानामधिपस्तदा ॥ त्रिपुरेण ययौ तूर्णं सागरं सिंधुबांध
वम् ॥ २२ ॥ सागरे जलगम्भीर उत्पपात पुरं वरम् ॥ अवतस्थुः पुराण्येव गोपुराभरणानि च ॥ २३ ॥ अपक्रांते तु त्रिपुरे त्रिपुरारि
स्त्रिलोचनः ॥ पितामहमुवाचेदं वेदवादविशारदम् ॥ २४ ॥ पितामह दृढं भीता भगवन् दानवा हि नः ॥ विपुलं सागरं ते तु दानवाः समु
पाश्रिताः ॥ २५ ॥ यत एव हि ते यातास्त्रिपुरेण तु दानवाः ॥ तत एव रथं तूर्णं प्रापयस्व पितामह ॥ २६ ॥ सिंहनादं ततः कृत्वा देवा
देवरथं च तम् ॥ परिवार्य ययुर्हृष्टाः सायुधाः पश्चिमोदधिम् ॥ २७ ॥ ततोऽमरामरगुरुं परिवार्य भवं हरम् ॥ नर्दयन्तो ययुस्तूर्णं सागरं
दानवालयम् ॥ २८ ॥ अथ चारुपताकभूषितं पटहाडम्बरशङ्खनादितम् ॥ त्रिपुरमाभिसमीक्ष्य देवता विविधबला ननदुर्यथा घनाः ॥ २९ ॥
असुरवरपुरेऽपि दारुणो जलधररावमृदङ्गगह्वरः ॥ दनुतनयनिनादमिश्रितः प्रतिनिधि संक्षुभितार्णवोपमः ॥ ३० ॥ अथ भुवनपतिर्गतिः

सुराणामरिमृगयामददात् सुलब्धबुद्धिः ॥ त्रिदशगणपतिर्बभुवाच शक्रं त्रिपुरगतं सहसा निरीक्ष्य शत्रुम् ॥३१॥ त्रिदशगणपते निशामयेतत् त्रिपुरनिकेतनं दानवाः प्रविष्टाः॥ यमवरुणकुबेरषण्मुखैस्तत् सह गणपैरपि हन्मि तावदेव॥३२॥विहितपरबलाभिघातभूतं व्रज जलधेस्तु यतः पुराणि तस्थुः ॥स रथवरगतो भवः समर्थो ह्युदधिमगात्त्रिपुरं पुनर्निहन्तुम्॥३३॥इति परिगणयंतो दितेः सुता ह्यवतस्थुर्लवणार्णवोपरिष्टात्॥ अभिभवत्रिपुरं सदानवेन्द्रं शरवर्षैर्मुसलैश्च वज्रमिश्रैः॥३४॥ अहमपि रथवर्यमास्थितः सुरवर वर्यं भवेय पृष्ठतः ॥ असुरवरवधार्थमुद्यतानां प्रतिविदधामि सुखाय तेऽनघ ॥ ३५॥ इति भववचनप्रचोदितो दशशतनयनवपुः समुद्यतः ॥ त्रिपुरपुराजिघांसया हरिः प्रविकसिताम्बुज लोचनो ययौ ॥ ३६ ॥ इति श्रीमात्स्ये महापुराणे त्रिपुराक्रमणं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ छ ॥ सूत उवाच ॥ मघवा तु निहन्तुं तानसुरानमरेश्वरः ॥ लोकपाला ययुः सर्वे गणपालाश्च सर्वशः ॥ १ ॥ ईश्वरामोदिताः सर्वे उत्पेतुश्चाम्बरे तदा ॥ खग तास्तु विरेजुस्ते पक्षवन्त इवाचलाः ॥ २ ॥ प्रययुस्तत्पुरं हन्तुं शरीरमिव व्याधयः ॥ शंखाडम्बरनिर्घोषैः पणवान्पटहानपि ॥ नादयंतः पुरो देवा हृष्टास्त्रिपुरवासिभिः ॥ ३ ॥ हरः प्राप्त इतीवोक्त्वा बलिनस्ते महासुराः ॥ आजग्मुः परमं क्षोभमत्ययेष्विव सागराः ॥४॥ सुरतूर्य रवं श्रुत्वा दानवा भीमदर्शनाः ॥ निनेदुर्वादयन्तश्च नानावाद्यान्यनेकशः ॥ ५ ॥ भूयोदीरितवीर्यास्ते परस्परकृतागसः ॥ पूर्वदेवाश्च देवाश्च सूदयन्तः परस्परम् ॥ ६ ॥ आक्रोशेऽपि समप्रख्ये तेषां देहनिकृन्तनम् ॥ प्रवृत्तं युद्धमतुलं प्रहारकृतनिःस्वनम् ॥ ७ ॥ निष्पतन्त इवा दित्याः प्रज्वलन्त इवाग्नयः ॥ शंसन्त इव नागेन्द्रा भ्रमन्त इव पक्षिणः ॥ गिरीन्द्रा इव कम्पन्तो गर्जंत इव तोयदाः ॥ ८ ॥ जृम्भन्त इव शार्दूलाः प्रवान्त इव वायवः ॥ प्रवृद्धोर्मितरङ्गौघाः क्षुभ्यन्त इव सागराः ॥ ९ ॥ प्रमथाश्च महाशूरा दानवाश्च महाबलाः ॥ युयुधुर्निश्चला भूत्वा वज्रा इव महाचलैः ॥ १० ॥ कार्मुकाणां विकृष्टानां बभूवुर्दारुणा रवाः ॥ कालानुगानां मेघानां यथा वियति वायुना ॥ ११ ॥ आहुश्च युद्धे मा भैषीः क्व यास्यसि मृतो ह्यसि ॥ प्रहराशु स्थितोऽस्म्यत्र एहि दर्शय पौरुषम् ॥ १२ ॥ गृहाण छिन्धि भिन्धीति खाद मारय दारय ॥ इत्यन्योऽन्यमनूच्चार्य प्रययुर्यमसादनम् ॥ १३ ॥ खड्गापवर्जिताः केचित्केचिच्छिन्नाः परश्वधैः ॥ केचिन्मुद्गरचूर्णाश्च केचि

द्वाहुभिराहताः ॥ १४ ॥ पट्टिशैः सूदिताः केचित्केचिच्छूलविदारिताः ॥ दानवाः शरपुष्पाभाः सवना इव पर्वताः ॥ निपतन्त्यर्णवजले भीम
नक्रातिमिङ्गिले ॥ १५॥ व्यसुभिः सुनिबद्धाङ्गैः पतमानैः सुरेतरैः ॥ सम्भ्रमूवार्णवे शब्दः सजलाम्बुदनिस्वनः ॥ १६ ॥ तेन शब्देन मकरा
नक्रास्तिमितिमिङ्गिलाः॥मत्ता लोहितगन्धेन क्षोभयन्तो महार्णवम्॥ १७॥परस्परेण कलहं कुर्वाणा भीममूर्तयः ॥भ्रमन्ते भक्षयन्तश्च दानवानां
च लोहितम् ॥ १८॥ सरथान्सायुधान्साश्वान्सवस्त्राभरणावृतान् ॥ जग्रसुस्तिमयो दैत्या द्रावयंतो जलेचरान्॥ १९॥ मृधं यथासुराणां च प्रम
थानां प्रवर्त्तते ॥ अम्बरेऽम्भसि च तथा युद्धं चक्रुर्जलेचराः ॥ २० ॥ यथा भ्रमन्ति प्रमथाः सदैत्यास्तथा भ्रमन्ते तिमयः सनक्राः ॥ यथैव
छिन्दन्ति परस्परं तु तथैव क्रन्दन्ति विभिन्नदेहाः ॥ २१ ॥ व्रणाननैरङ्गरसं स्रवद्भिः सुरासुरैर्नक्रतिमिङ्गिलैश्च ॥ कृतो मुहू
र्त्तेन समुद्रदेशः सरक्ततोयः समुदीर्णतोयः ॥ २२ ॥ पूर्वं महाम्भोधरपर्वताभं द्वारं महान्तं त्रिपुरस्य शक्रः ॥ निपीड्य तस्थौ महता बलेन
युक्तोऽमराणां महता बलेन ॥ २३ ॥ तथोत्तरं सोऽन्तरजो हरस्य बालार्कजाम्बूनदतुल्यवर्णः ॥ स्कन्दः पुरद्वारमथारुरोह वृद्धोऽस्त
शृङ्गं प्रपतन्निवार्कः ॥ २४ ॥ यमश्च वित्ताधिपतिश्च देवो दण्डान्वितः पाशवरायुधश्च ॥ देवारिणस्तस्य पुरस्य द्वारं ताभ्यां तु तत्पाश्चिमतो
निरुद्धम् ॥ २५ ॥ दक्षारिरुद्रस्तपनायुताभः स भास्वता देवरथेन देवः ॥ तद्दक्षिणद्वारमरेः पुरस्य रुद्ध्वावतस्थौ भगवांस्त्रिनेत्रः ॥ २६ ॥
तुङ्गानि वेश्मानि सगोपुराणि स्वर्णानि कैलासशशिप्रभाणि ॥ प्रह्लादरूपाः प्रमथावरुद्धा ज्योतींषि मेघा इव चाश्मवर्षाः ॥ २७ ॥ उत्पाट्य
चोत्पाट्य गृहाणि तेषां सशैलमालासमवेदिकानि॥प्रक्षिप्य प्रक्षिप्य समुद्रमध्ये कालाम्बुदाभाः प्रमथा विनेदुः॥२८॥ रक्तानि चाशेषवनैर्युतानि
साशोकखण्डानि सकोकिलानि ॥ गृहाणि हे नाथ पितः सुतेति भ्रातेति कान्तेति प्रियेति चापि ॥ उत्पाट्यमानेषु गृहेषु नार्यस्त्वनार्यशब्दान्विवि
धान्प्रचक्रुः ॥२९॥ कलत्रपुत्रक्षयप्राणनाशे तस्मिन् पुरे युद्धमतिप्रवृत्ते ॥ महासुराः सागरतुल्यवेगा गणेश्वराः कोपवृताः प्रतीयुः ॥ ३० ॥
परश्वधैस्तत्र शिलोपलैश्च त्रिशूलवज्रोत्तमकम्पनैश्च ॥ शरीरसन्नक्षपणं सुघोरं युद्धं प्रवृत्तं दृढवैरबद्धम् ॥ ३१॥ अन्योन्यमुद्दिश्य विमर्दतां च
प्रधावतां चैव विनिघ्नतां च ॥ शब्दो बभूवामरदानवानां युगान्तकालेष्विव सागरान्तः ॥ ३२ ॥ व्रणैरजस्रं क्षतजं वमन्तः कोपोपरक्ता बहुधा

नदन्तः॥गणेश्वरास्तेऽसुरपुङ्गवाश्च युद्ध्यन्ति शब्दं च महत्स्वनन्ते ॥ ३३ ॥ मार्गाः पुरे लोहितकर्दमाढ्याः स्वर्णेष्टकास्फाटिकाभिन्नचित्राः ॥ कृत्वा मुहूर्त्तेन सुखेन गन्तुं छिन्नोत्तमाङ्गाग्रिकराः कराढ्याः ॥३४॥ कोपावृताक्षः स तु तारकाख्यः संख्ये सवृक्षः सगिरिर्निलीनः ॥ तस्मिन् क्षणे द्वारवरं रिरक्षो रुद्धं भवेनाद्भुतविक्रमेण ॥ ३५ ॥ स तत्र प्राकारगतांश्च भूताञ्छातन्महानद्भुतवीर्यसत्त्वः ॥ चचार चातेन्द्रियगर्वदृप्तः पुराद्विनिष्क्रम्य ररास घोरम् ॥ ३६ ॥ ततः स दैत्योत्तमपर्वताभो यथाञ्जसा नाग इवाभिमत्तः ॥ निवारितो रुद्ररथं जिघृक्षुर्यथार्णवः सर्पति चातिवेलः ॥ ३७ ॥ शेषः सुधन्वा गिरिशश्च देवश्चतुर्मुखो यः स त्रिलोचनश्च ॥ ते कालकाल्याभिगता गताजौ क्षोभं यथा वायुवशात्समुद्राः ॥ ३८ ॥ शेषो गिरिशः सपितामहेशश्चोत्क्षुभ्यमाणः स रथेऽम्बरस्थः ॥ बिभेद सन्धिषु बलाभिपन्नः कूजन्निनादांश्च करोति घोरान् ॥ ३९ ॥ एकं तु ऋग्वेदतुरङ्गमस्य पृष्ठे पदं न्यस्य वृषस्य चैकम् ॥ तस्थौ भवः सोद्यतबाणचापः पुरस्य तत्सङ्गममीक्षमाणः ॥ ४० ॥ तदा भवपदन्यासाद्धयस्य वृषभस्य च ॥ पेतुः स्तनाश्च दन्ताश्च पीडिताभ्यां त्रिशूलिना ॥ ४१ ॥ ततःप्रभृति चाश्वानां स्तना दन्ता गवां तथा ॥ गूढाः समभवंस्तेन चादृश्यत्वमुपागताः ॥ ४२ ॥ तारकाख्यस्तु भीमाक्षो रौद्ररक्तान्तरेक्षणः ॥ रुद्रान्तिके सुसंरुद्धो नन्दिना कुलनन्दिना ॥ ४३ ॥ परश्वधेन तीक्ष्णेन स नन्दी दानवेश्वरम् ॥ तक्षयामास वै तक्षा चन्दनं गन्धदो यथा ॥ ४४ ॥ परश्वधहतः शूरः शैलादिः शरभो यथा ॥ दुद्राव खड्गं निष्कृष्य तारकाख्यो गणेश्वरम् ॥ ४५ ॥ यज्ञोपवीतमादाय चिच्छेद च ननाद च ॥ ततः सिंहरवो घोरः शंखशब्दश्च भैरवः ॥ गणेश्वरैः कृतस्तत्र तारकाख्ये निषूदिते ॥ ४६ ॥ प्रमथारसितं श्रुत्वा वादित्रस्वनमेव च ॥ पार्श्वस्थः सुमहापार्श्वं विद्युन्मालिं मयोऽब्रवीत् ॥ ४७ ॥ बहुवदनवतां किमेष शब्दो नदतां श्रूयते भिन्नसागराभः॥वद वचनं ताडिमालिन् किं किमेतद्गणपाला युयुधुर्यथुगजेन्द्राः ॥ ४८ ॥ इति मयवचनाङ्कुशार्दितस्तं तडिमाली रविरिवांशुमाली ॥ रणशिरसि समागतः सुराणां निजगादेदमरिन्दमोऽतिहर्षात् ॥ ४९ ॥ यमवरुणमहेन्द्ररुद्रवीर्य्यस्तव यशसो निधिर्धीर तारकाख्यः ॥ सकलसमरशीर्षपर्वतेन्द्रो युद्धावस्तपति हि तारको गणेन्द्रैः ॥ ५० ॥ मृदितमुपनिशम्य तारकाख्यं रविदीप्तानलभीषुणायताक्षम् ॥ व्यथितसकलनेत्रलोमसत्त्वाः

प्रमथास्तोयमुचो यथा नदन्ति ॥ ५१ ॥ इति सुहृदो वचनं निशम्य तस्य ताडिमालेः स मयस्सुवर्णमाली ॥ रणशिरस्यसिताञ्जनाचलाभो जगदे वाक्यमिदं नवेन्दुमाल्मि ॥ ५२ ॥ विद्युन्मालिन्न नः कालः साधितुं ह्यवहेलया ॥ करोमि विक्रमेणैतत्पुरं व्यसनवर्जितम् ॥ ५३ ॥ विद्युन्माली ततः क्रुद्धो मयश्च त्रिपुरेश्वरः ॥ गणाञ्जघ्नुस्तु द्विधिष्ठाः सहितास्तैर्महासुरैः ॥ ५४ ॥ येन येन ततो विद्युन्माली याति मयश्च सः ॥ तेन तेन पुरं शून्यं प्रमथैः प्रहतैः कृतम् ॥ ५५ ॥ अथ यमवरुणमृदङ्गघोषैः पणवडिण्डिरज्यास्वनप्रघोषैः ॥ सकरतलपुटैश्च सिंहनादैर्भवमभिपूज्य सुरावतस्थुः ॥ ५६ ॥ सम्पूज्यमानो दितिजैर्महात्मभिः सहस्ररश्मिप्रतिमोजसैर्विभुः ॥ अभिष्टुतः सत्यरतैस्तपोधनैर्यथास्तशृङ्गाभिगतो दिवाकरः॥ ५७॥ इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे तारकाख्यवधो नामाष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

सूत उवाच ॥ तारकाख्ये हते युद्धे उत्साप्य प्रमथान्मयः ॥ उवाच दानवान्भूयो भूयः स तु भयावृतान् ॥ १ ॥ भोऽसुरेन्द्राधुना सर्वे निबोधध्वं प्रभाषितम् ॥ यत्कर्तव्यं मया चैव युष्माभिश्च महाबलैः ॥ २ ॥ पुष्यं समेष्यते काले चन्द्रश्चन्द्रनिभानना ॥ यदेकं त्रिपुरं सर्वं क्षणमेकं भविष्यति ॥ ३ ॥ कुरुध्वं निर्भयाः काले कोकिलाशंसितेन च ॥ स कालः पुष्ययोगस्य पुरस्य च मया कृतः ॥ ४ ॥ काले तस्मिन्पुरे यस्तु सम्भावयति संहतिम् ॥ स एनं कारयेत्तूर्णं बलिनैकेषुणा सुरः ॥ ५ ॥ योधां प्राणो बलं यच्च या च वो वैरिताऽसुराः ॥ तत्कृत्वा हृदये चैव पालयध्वमिदं पुरम् ॥ ६ ॥ महेश्वररथं ह्येकं सर्वप्राणेन भीषणम् ॥ विमुखीकुर्वतात्यर्थं यथा नोत्सृजते शरम् ॥ ७ ॥ तत एवंकृतेऽस्माभिस्त्रिपुरस्यापि रक्षणे ॥ प्रतीक्षिष्यन्ति विवशाः पुष्ययोगं दिवौकसः ॥ ८ ॥ निशम्य तन्मयस्यैवं दानवास्त्रिपुरालयाः ॥ मुहुः सिंहरुतं कृत्वा मयमूचुर्यमोपमाः ॥ ९ ॥ प्रयत्नेन वयं सर्वे कुर्म्मस्तव प्रभाषितम् ॥ तथा कुर्म्मो यथा रुद्रो न मोक्ष्यति पुरे शरम् ॥ १० ॥ अद्य यास्याम संग्रामे तद्रुद्रस्य जिघांसवः ॥ कथयन्ति दितेः पुत्रा हृष्टा भिन्नतनूरुहाः ॥ ११ ॥ कल्पं स्थास्यन्ति वा स्वस्थं त्रिपुरं शाश्वतं ध्रुवम् ॥ अदानवं वा भविता नारायणपदत्रयम् ॥ १२ ॥ वयं न धर्म्मं हास्यामो यस्मिन्प्रोक्षति नो भवान् ॥ अदेवतमदैत्यं वा लोकं द्रक्ष्यन्ति मानवाः ॥ १३ ॥ इति संमंत्र्य हृष्टास्ते पुरान्तर्विबुधारयः ॥

प्रदोषे मुदिता भूत्वा चेरुर्मन्मथचारताम् ॥ १४ ॥ मुहुर्मुक्तोदयो भ्रान्त उदयाग्रं महामणिः ॥ तमांस्युत्सार्य्य भगवांश्चन्द्रो जृम्भाति सोऽम्बरम् ॥ १५ ॥ कुमुदालंकृते हंसो यथा सरसि विस्तृते ॥ सिंहो यथा चोपविष्टो वैदूर्य्यशिखरे महान् ॥ १६ ॥ विष्णोर्य्यथा च विस्तीर्णे हारश्चोरसि संस्थितः ॥ तथावगाहे नभसि चन्द्रोऽत्रिनयनोद्भवः ॥ भ्राजते भ्राजयँल्लोकान्सृजञ्ज्योत्स्नारसं बलात् ॥ १७॥ शीतांशावुदिते चन्द्रे ज्योत्स्नापूर्णे पुरेऽसुराः ॥ प्रदोषे ललितं चक्रुर्गृहमात्मानमेव च ॥ १८॥ रथ्यासु राजमार्गेषु प्रासादेषु गृहेषु च ॥ दीपाश्चम्पकपुष्पाभा नाल्पस्नेहप्रदीपिताः ॥ १९ ॥ तदा मठेषु ते दीपाः स्नेहपूर्णाः प्रदीपिताः ॥ गृहाणि वसुमन्त्येषां सर्वरत्नमयानि च ॥ ज्वलतो दीपयन्दीपांश्चन्द्रोदयमिव ग्रहाः ॥ २० ॥ चन्द्रांशुभिर्भासमानमन्तर्दीपैः सुदीपितम् ॥ उपद्रवैः कुलमिव पीयते त्रिपुरे तमः ॥ २१॥ तस्मिन्पुरे वै तरुणप्रदोषे चन्द्राट्टहासे तरुणप्रदोषे ॥ रत्यर्थिनो वै दनुजा गृहेषु सहाङ्गनाभिः सुचिरं विरेमुः ॥ २२ ॥ विनोदिता ये तु वृषध्वजस्य पञ्चेषवस्ते मकरध्वजेन ॥ तत्रासुरेष्वासुरपुङ्गवेषु स्वाङ्गाङ्गनाः स्वेदयुता बभूवुः ॥२३ ॥ कलप्रलापेषु च दानवीनां वीणाप्रलापेषु च मूर्छितांस्तु ॥ मत्तप्रलापेषु च कोकिलानां सचापबाणो मदनो ममन्थ ॥२४ ॥ तमांसि नैशानि द्रुतं निहत्य ज्योत्स्नावितानेन जगद्वितत्य ॥ खे रोहिणीं तां च प्रियां समेत्य चन्द्रः प्रभाभिः कुरुतेऽधिराज्यम् ॥ २५ ॥ स्थित्वैव कान्तस्य तु पादमूले काचिद्वरस्त्री स्वकपोलमूले ॥ विशेषकं चारुतरं करोति तेनाननं स्वं समलङ्करोति ॥ २६ ॥ दृष्ट्वाननं मण्डलदर्पणस्थं महाप्रभा मे मुखजेति जज्ञा ॥ स्मृत्वा वराङ्गी रमणेरितानि तेनैव भावेन रतीमवाप ॥ २७ ॥ रोमाञ्चितैर्गात्रवरैर्युवभ्यो रतानुरागाद्रमणेन चान्याः ॥ स्वयं द्रुतं यान्ति मदाभिभूताः क्षपा यथा चार्कदिनावसाने ॥ २८ ॥ पेपीयते चातिरसानुविद्धा विमार्गितान्या च प्रियं प्रसन्ना ॥ काचित् प्रियस्यातिचिरात् प्रसन्ना आसीत्प्रलापेषु च संप्रसन्ना ॥२९ ॥ गोशीर्षयुक्तैर्हरिचन्दनैश्च पङ्काङ्किताक्षीरधरासुरीणाम् ॥ मनोज्ञरूपा रुचिरा बभूवुः पूर्णामृतस्येव सुवर्णकुम्भाः ॥ ३० ॥ क्षताधरोष्ठा द्रुतदोषरक्ता लुलन्ति दैत्या दयितासु रक्ताः ॥ तन्त्रीप्रलापास्त्रिपुरेषु रक्ताः स्त्रीणां प्रलापेषु पुनर्विरक्ताः ॥ ३१ ॥ क्वचित्प्रवृत्तं मधुराभिगानं कामस्य बाणैः सुकृतं निधानम् ॥ आपानभूमीषु सुखप्रमेयं गेयं प्रवृत्तं त्वथ साधयन्ति ॥ ३२ ॥ गेयं प्रवृत्तं त्वथ शोधयन्ति केचित्प्रियां

तत्र च साधयन्ति ॥ केचित्प्रियां सम्प्रतिबोधयन्ति सम्बुध्य सम्बुध्य च रामयन्ति ॥ ३३ ॥ चूतप्रसूनप्रभवः सुगन्धः सूर्य्ये गते वै त्रिपुरे बभूव ॥ समर्म्मरो नूपुरमेखलानां शब्दश्च सम्बाधति कोकिलानाम् ॥ ३४ ॥ प्रियावगूढा दयितोपगूढा काचित्प्ररूढाङ्गरुहापि नारी ॥ सुचारुबाष्पांकुरपल्लवानां नवाम्बुसिक्ता इव भूमिरासीत् ॥ ३५ ॥ शशाङ्कपादैरुपशोभितेषु प्रासादवर्य्येषु वराङ्गनानाम् ॥ माधुर्यभूताभरणा महान्तः स्वना बभूवुर्मदनेषु तुल्याः ॥ ३६ ॥ पानेन खिन्ना दयितातिवेलं कपोलमाघ्राति च किं ममेदम् ॥ आरोह मे श्रोणिमिमां विशालां पीनोन्नतां काञ्चनमेखलाढ्याम् ॥ ३७ ॥ रथ्यासु चन्द्रोदयभासितासु सुरेन्द्रमार्गेषु च विस्तृतेषु ॥ दैत्याङ्गना यूथगता विभान्ति तारा यथा चन्द्रमसो दिवान्ते ॥ ३८ ॥ अट्टाट्टहासेषु च चामरेषु प्रेङ्खासु चान्या मदलोलभावात् ॥ सन्दोलयन्ते कलसम्प्रहासाः प्रोवाच काञ्चीगुणसूक्ष्मनादा ॥ ३९ ॥ अम्लानमालान्वितसुन्दरीणां पर्य्याय एषोऽस्ति च हर्षितानाम् ॥ श्रूयन्ति वाचः कलधौतकल्पा वापीषु चान्ये कलहंसशब्दाः ॥ ४० ॥ काञ्चीकलापश्च सशाङ्गरागः प्रेङ्खासु तद्रागकृताश्च भावाः ॥ छिन्दन्ति तासामसुराङ्गनानां प्रियालयान्मन्मथमार्गणानाम् ॥ ४१ ॥ चित्राम्बरश्चोद्धृतकेशपाशः सन्दोल्यमानः शुशुभेऽसुरीणाम् ॥ सुचारुवेशाभरणैरुपेतस्तारागणैर्ज्योतिरिवास चन्द्रः ॥ ४२ ॥ सन्दोलनादुच्छ्रितैश्छिन्नसूत्रैः काञ्चीभ्रष्टैर्मणिभिर्विप्रकीर्णैः ॥ दोलाभूमिस्तैर्विचित्रा विभाति चन्द्रस्य पार्श्वोपगतैर्विचित्रा ॥ ४३ ॥ सचन्द्रिके सोपवने प्रदोषे रुतेषु वृन्देषु च कोकिलानाम् ॥ शरव्ययं प्राप्य पुरेऽसुराणां प्रक्षीणबाणो मदनश्चचार ॥ ४४ ॥ इति तत्र पुरेऽमरद्विषाणां सपदि हि पश्चिमकौमुदी तदासीत् ॥ रणशिरसि पराभविष्यतां वै भवतुरगैः कृतसंक्षया अरीणाम् ॥ ४५ ॥ चन्द्रोथ कुन्दकुसुमाकरहारवर्णो ज्योत्स्नावितानरहितोऽभ्रसमानवर्णः ॥ निच्छायतां हि समुपेत्य न भाति तद्वत् भाग्यक्षये धनपतिश्च नरो विवर्णः ॥ ४६ ॥ चन्द्रप्रभामरुणसारथिनाभिभूय सन्तप्तकाञ्चनरथाङ्गसमानबिम्बः ॥ स्थित्वोदयाग्रमुकुटे बहुरेव सूर्यो भात्यम्बरे तिमिरतोयवहां तरिष्यन् ॥ ४७ ॥ इति श्रीमात्स्ये महापुराणे त्रिपुरकौमुदीनामैकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ छ ॥ सूत उवाच ॥ उदिते तु सहस्रांशौ मेरौ भासाकरे रवौ ॥ नदद्देवबलं कृत्स्नं युगान्त इव सागराः ॥ १ ॥ सहस्रनयनो देवस्ततः शक्रः पुरन्दरः ॥ सवित्तदः सवरुणस्त्रिपुरं प्रययौ हरः ॥ २ ॥ ते

नानाविधरूपाश्च प्रमथातिप्रमाथिनः ॥ ययुः सिंहरवैर्घोरैर्वादित्रनिनदैरपि ॥ ३ ॥ ततो वादितवादित्रैश्चातपत्रैर्महाद्रुमैः ॥ बभूव तद्बलं दिव्यं वनं प्रचलितं यथा ॥ ४ ॥ तदापतन्तं सम्प्रेक्ष्य रौद्रं रुद्रबलं महत् ॥ संक्षोभो दानवेन्द्राणां समुद्रप्रतिमो बभौ ॥ ५ ॥ ते चासीन् पट्टिशान् शक्तीः शूलदण्डपरश्वधान् ॥ शरासनानि वज्राणि गुरूणि मुसलानि च ॥ ६ ॥ प्रगृह्य कोपरक्ताक्षाः सपक्षा इव पर्वताः ॥ निजघ्नुः पर्वतप्राय घना इव तपात्यये ॥ ७ ॥ सविद्युन्मालिनस्ते वै समया दितिनन्दनाः ॥ मोदमानाः समासेदुर्दैवदेवैः सुरारयः ॥ ८ ॥ मर्त्तव्यकृतबुद्धीनां जये चानिश्चितात्मनाम् ॥ अबलानां चमूर्ह्यासीदबलावयवा इव ॥ ९ ॥ विगर्जन्त इवाम्भोदा अम्भोदसदृशात्विषः ॥ प्रयुद्धा युद्धकुशलाः परस्परकृतागसः ॥ १० ॥ धूमायन्तो ज्वलद्भिश्च आयुधैश्चन्द्रवर्चसैः ॥ कोपाद्धा युद्धलुब्धाश्च कुट्टयन्ते परस्परम् ॥ ११ ॥ वज्राहताः पतन्त्यन्ये बाणैरन्ये विदारिताः ॥ अन्ये विदारिताश्चक्रैः पतन्ति ह्युदधेर्जले ॥ १२ ॥ छिन्नस्रग्दामहाराश्च प्रमृष्टाम्बरभूषणाः ॥ तिमिनक्रगणे चैव पतन्ति प्रमथाः सुराः ॥ १३ ॥ गदानां मुसलानां च तोमराणां परश्वधाम् ॥ वज्रशूलर्ष्टिपातानां पट्टिशानां च सर्वतः ॥ १४ ॥ गिरिशृंगोपलानां च प्रेरितानां प्रमन्युभिः ॥ सजवानां दानवानां सधूमानां रवित्विषाम् ॥ आयुधानां महानोघः सागरोघे पतत्यपि ॥ १५ ॥ प्रवृद्धवेगैस्तैस्तत्र सुरासुरकरेरितैः ॥ आयुधैस्त्रस्तनक्षत्रः क्रियते संक्षयो महान् ॥ १६ ॥ क्षुद्राणां गजयोर्युद्धे यथा भवति संक्षयः ॥ देवासुरगणैस्तद्वत्तिमिनक्रक्षयोऽभवत् ॥ १७ ॥ विद्युन्माली च वेगेन विद्युन्माली इवाम्बुदः ॥ विद्युन्मालघनोन्नादो नन्दीश्वरमभिद्रुतः ॥ १८ ॥ स तं तमोऽरिवदनं प्रणदन्वदतां वरः ॥ उवाच युधि शैलादिं दानवोऽम्बुधिनिःस्वनः ॥ १९ ॥ युद्धाकांक्षी तु बलवान्विद्युन्माल्यहमागतः ॥ यदि त्विदानीं मे जीवन्मुच्यसे नन्दिकेश्वर ॥ न विद्युन्मालिहननं वचोभिर्युधि दानव ॥ २० ॥ तमेवंवादिनं दैत्यं नन्दीशस्तपतां वरः ॥ उवाच प्रहसंस्तत्र वाद्यलङ्कारवद्वचः ॥ २१ ॥ दानवा धर्म्मकामानां नैषोऽवसर इत्युत ॥ शक्तो हन्तुं किमात्मानं जातिदोषाद्विबृंहसि ॥ २२ ॥ यदि तावन्मया पूर्वं हतोऽसि पशुवद्यथा ॥ इदानीं वा कथं नाम न हिंस्ये क्रतुदूषणम् ॥ २३ ॥ सागरं तरते दोर्भ्यां पातयेद्यो दिवाकरम् ॥ सोऽपि मां शक्नुयान्नैव चक्षुर्भ्यां समवीक्षितुम् ॥ २४ ॥ इत्येवंवादिनं तत्र नन्दिनं तान्निभो बले ॥

बिभेदैकेषुणा दैत्यः करेणार्क इवाम्बुदम् ॥ २५ ॥ वक्षतः स शरस्तस्य पपौ रुधिरमुत्तमम् ॥ सूर्य्यस्त्वात्मप्रभावेण नद्यर्णवजलं यथा ॥ २६ ॥ स तेन सुप्रहारेण प्रथमं चातिरोषितः ॥ हस्तेन वृक्षमुत्पाट्य चिक्षेप गजराडिव ॥ २७ ॥ वायुनुन्नः स च तरुः शीर्णपुष्पो महारवः ॥ विद्युन्मालिशरैश्छिन्नः पपात पतगेशवत् ॥ २८ ॥ वृक्षमालोक्य तं छिन्नं दानवेन वरेषुभिः ॥ रोषमाहारयत्तीव्रं नन्दीश्वरः सुविग्रहः ॥ २९ ॥ सोद्यम्य करमारावे रविशक्रकरप्रभम् ॥ दुद्राव हन्तुं स क्रूरं महिषं गजराडिव ॥ ३० ॥ तमापतन्तं वेगेन वेगवान्प्रसभं बलात् ॥ विद्युन्माली शरशतैः पूरयामास नन्दिनम् ॥ ३१ ॥ शरकण्टकिताङ्गो वै शैलादिः सोऽभवत् पुनः ॥ अरेर्गृह्य रथं तस्य महतः प्रययौ जवात् ॥ ३२ ॥ विलम्बिताश्वो विशिरो भ्रामितश्च रणे रथः ॥ पपात मुनिशापेन सादित्योऽर्करथो यथा ॥ ३३ ॥ अन्तरान्निर्गतश्चैव मायया स दितेः सुतः ॥ आजघान तदा शक्त्या शैलादिं समवस्थितम् ॥ ३४ ॥ तामेव तु विनिष्क्रम्य शक्तिं शोणितभूषिताम् ॥ विद्युन्मालिं समुद्दिश्य चिक्षेप प्रमथाग्रणीः ॥ ३५ ॥ तया भिन्नतनुत्राणो विभिन्नहृदयस्त्वपि ॥ विद्युन्माल्यपतद्भूमौ वज्राहत इवाचलः ॥ ३६ ॥ विद्युन्मालिनि निहते सिद्धचारणकिन्नराः ॥ साधु साध्विति चोक्त्वा तेऽपूजयन्त उमापतिम् ॥ ३७ ॥ नन्दिना सादिते दैत्ये विद्युन्मालौ हते मयः ॥ ददाह प्रमथानीकं वनमग्निरिवोद्धतः ॥ ३८ ॥ शूलनिर्दारितोरस्का गदाचूर्णितमस्तकाः ॥ इषुभिर्गाढविद्धाश्च पतन्ति प्रमथार्णवे ॥ ३९ ॥ अथ वज्रधरो यमोऽर्थदः स च नन्दी स च षण्मुखो गुहः ॥ मयमसुरवीरसंप्रवृत्तं विविधुः शस्त्रवरैर्हतारयः ॥ ४० ॥ नागं तु नागाधिपतेः शताक्षं मयो विदार्य्येषुवरेण तूर्णम् ॥ यमं च वित्ताधिपतिं च विद्ध्वा ररास मत्ताम्बुदवत्तदानीम् ॥ ४१ ॥ ततः शरैः प्रमथगणैश्च दानवा दृढाहताश्चोत्तमवेगविक्रमाः ॥ भृशानुविद्धास्त्रिपुरं प्रवेशिता यथा शिवश्चक्रधरेण संयुगे ॥ ४२ ॥ ततस्तु शंखानकभेरिमर्दलाः ससिंहनादा दनुपुत्रभङ्गदाः ॥ कपर्दिसैन्ये प्रबभुः समन्ततो निपात्यमाना युधि वज्रसन्निभाः ॥ ४३ ॥ अथ दैत्यपुराभावे पुष्ययोगो बभूव ह ॥ बभूव चापि संयुक्तं तद्योगेन पुरत्रयम् ॥ ४४ ॥ ततो बाणं त्रिधा देवस्त्रिदैवतमयं हरः ॥ मुमोच त्रिपुरे तूर्णं त्रिनेत्रास्त्रिपथाधिपः ॥ ४५ ॥ तेन मुक्तेन बाणेन बाणपुष्पसमप्रभम् ॥ आकाशं स्वर्णसङ्काशं कृतं सूर्य्येण रञ्जितम् ॥ ४६ ॥ मुक्त्वा त्रिदैवतमयं त्रिपुरे त्रिदशः शरम् ॥

धिग्धिङ्मामीति चक्रन्द कष्टं कष्टमिति ब्रुवन् ॥ ४७ ॥ वैधुर्य्यं दैवतं दृष्ट्वा शैलादिर्गणसत्तमः ॥ किमिदं त्विति पप्रच्छ शूलपाणिं महे-
श्वरम् ॥ ॥ ४८ ॥ ततः शशाङ्कतिलकः कपर्दी परमार्त्तवत् ॥ उवाच नन्दिनं भक्तः स मयोऽद्य विनङ्क्ष्यति ॥ ४९ ॥ अथ नन्दीश्वरस्तूर्णं
मनोमारुतवद्बली ॥ शरे त्रिपुरमायाति त्रिपुरं प्रविवेश सः ॥ ५० ॥ स मयं प्रेक्ष्य गणपः प्राह काञ्चनसन्निभः ॥ विनाशात्त्रिपुरस्यास्य प्राप्तो
मय सुदारुणः ॥ ५१ ॥ अनेनैव गृहेण त्वमपक्राम ब्रवीम्यहम् ॥ श्रुत्वा तन्नन्दिवचनं दृढभक्तो महेश्वरे ॥ तेनैव गृहमुख्येन त्रिपुरादपस-
र्पितः ॥ ५२ ॥ सोऽपीषुः पत्रपुटवद्दग्ध्वा तन्नगरत्रयम् ॥ त्रिधा इव हुताशश्च सोमो नारायणस्तथा ॥ ५३॥ शरतेजःपरीतानि पुराणि द्विज-
पुङ्गवाः ॥ दुष्पुत्रदोषाद्दह्यन्ते कुलान्यूर्ध्वं यथा तथा ॥ ५४ ॥ मेरुकैलासकल्पानि मन्दराग्रनिभानि च ॥ सकपाटगवाक्षाणि बलिभिः
शोभितानि च ॥ ५५ ॥ सप्रासादानि रम्याणि कूटागारोत्कटानि च ॥ सजलानि समाख्यानि सावलोकनकानि च ॥ ५६ ॥ बद्धध्वजपता-
कानि स्वर्णरौप्यमयानि च ॥ गृहाणि तस्मिंस्त्रिपुरे दानवानामुपद्रवे ॥ दह्यन्ते दहनाभानि दहनेन सहस्रशः ॥ ५७ ॥ प्रासादाग्रेषु रम्येषु
वनेषूपवनेषु च ॥ वातायनगताश्चान्याश्चाकाशस्य तलेषु च ॥ ५८ ॥ रमणैरुपगूढाश्च रमन्त्यो रमणैः सह ॥ दह्यन्ते दानवेन्द्राणा-
मग्निना ह्यपि ताः स्त्रियः ॥ ५९ ॥ काचित्प्रियं परित्यज्य अशक्ता गन्तुमन्यतः ॥ पुरः प्रियस्य पञ्चत्वं गताग्निवदने
स्वयम् ॥ ६० ॥ उवाच शतपत्राक्षी साश्राक्षीव कृताञ्जलिः ॥ हव्यवाहन भार्य्याहं परस्य परतापन ॥ धर्म्मसाक्षी त्रिलोकस्य न मां
स्प्रष्टुमिहार्हसि ॥ ६१ ॥ शायितं च मया देव शिवया च शिवप्रभ ॥ परेण प्रेहि मुक्त्वेदं गृहं च दयितं हि मे ॥ ६२ ॥ एका पुत्र-
मुपादाय बालकं दानवाङ्गना ॥ हुताशनसमीपस्था इत्युवाच हुताशनम् ॥ ६३ ॥ बालोऽयं दुःखलब्धश्च मया पावक पुत्रकः ॥ नार्हस्येन-
मुपादातुं दयितं षण्मुखप्रिय ॥ ६४॥ काश्चित्प्रियान्परित्यज्य पीडिता दानवाङ्गनाः ॥ निपतन्त्यर्णवजले भ्रश्यमानविभूषणाः ॥ ६५ ॥ तात
पुत्रेति मातेति मातुलेति च विह्वलम् ॥ चक्रन्दुस्त्रिपुरे नार्य्यः पावकज्वालवेपिताः ॥ ६६ ॥ यथा दहति शैलाग्निः साम्बुजं जलजाकरम् ॥
तथा स्त्रीवक्त्रपद्मानि चादहत्त्रिपुरेऽनलः ॥ ६७ ॥ तुषारराशिः कमलाकराणां यथा दहत्यम्बुजकानि शीते ॥ तथैव सोऽग्निस्त्रिपुराङ्गनानां

ददाह वक्त्रेक्षणपङ्कजानि ॥ ६८ ॥ शराग्निपातात्समभिद्रुतानां तत्राङ्गनानामतिकोमलानाम् ॥ बभूव काञ्चीगुणनूपुराणामाक्रन्दितानां च
रवोऽतिमिश्रः ॥ ६९ ॥ दग्धार्द्धचन्द्राणि सवेदिकानि विशीर्णहर्म्याणि सतोरणानि ॥ दग्धानिदग्धानि गृहाणि तत्र पतन्ति रक्षार्थमिवार्ण
वौघे ॥७०॥ गृहैः पतद्भिर्ज्वलनावलीढैरासीत्तिसमुद्रे सलिलं प्रतप्तम् ॥ कुपुत्रदोषैः प्रहतानुविद्धं यथा कुलं याति धनान्वितस्य॥७१॥गृहप्रतापैः
क्वथितं समन्तात्तदार्णवे तोयमुदीर्णवेगम् ॥ वित्रासयामास तिमीन्सनक्रांस्तिमिङ्गिलांस्तत्क्वथितांस्तथान्यान् ॥७२॥ सगोपुरो मन्दरपादकल्पः
प्राकारवर्यस्त्रिपुरे च सोऽथ ॥ तैरेव सार्द्धं भवनैः पपात शब्दं महान्तं जनयन्समुद्रे ॥ ७३ ॥ सहस्रशृङ्गैर्भवनैर्यदासीत्सहस्रशृङ्गः स इवाच
लेशः ॥ नामावशेषं त्रिपुरं प्रजज्ञे हुताशनाहारबलिप्रयुक्तम् ॥ ७४ ॥ प्रदह्यमानेन पुरेण तेन जगत्सपातालदिवं प्रतप्तम् ॥ दुःखं महत्प्राप्य
जलावमग्नं यस्मिन्महान्सोधवरो मयस्य ॥ ७५॥ तद्देवेशो वचः श्रुत्वा इन्द्रो वज्रधरस्तदा ॥ शशाप तद्गृहं चापि मयस्यादितिनन्दनः ॥७६॥
असेव्यमप्रतिष्ठं च भयेन च समावृतम् ॥ भविष्यति मयगृहं नित्यमेव यथाऽनलः॥७७॥ यस्य यस्य तु देशस्य भविष्यति पराभवः ॥ द्रक्ष्यन्ति
त्रिपुरं खण्डं तत्रेदं नाशगा जनाः ॥ तदेतद्द्यापि गृहं मयस्यामयवर्जितम् ॥ ७८ ॥ ऋषय ऊचुः ॥ भगवन्स मयो येन गृहेण प्रपलायितः ॥
तस्य नो गतिमाख्याहि मयस्य च सतोद्भव ॥ ७९ ॥ सूत उवाच ॥ दृश्यते दृश्यते यत्र ध्रुवस्तत्र मयास्पदम् ॥ देवद्विट् तु मयश्चातः स
तदा खिन्नमानसः ॥ ततश्च्युतोऽन्यलोकेऽस्मिंस्त्राणार्थं वै चकार सः ॥ ८० ॥ तत्रापि देवताः सन्ति आतोर्यामाः सुरोत्तमाः ॥ तत्राशक्तं
ततो गन्तुं तं चैकं पुरमुत्तमम् ॥ ८१ ॥ शिवः सृष्ट्वा गृहं प्रादान्मयश्चैव गृहार्थिनम् ॥ विरराम सहस्राक्षः पूजयामास चेश्वरम् ॥ पूज्यमानं च
भूतेशं सर्वे तुष्टुवुरीश्वरम् ॥ ८२ ॥ सम्पूज्यमानं त्रिदशैः समीक्ष्य गणैर्गणेशाधिपतिं तु मुख्यम् ॥ हर्षाद्धवल्गुर्जहसुश्च देवा जग्मुर्ननर्दुस्तु
विषक्तहस्ताः ॥ ८३॥ पितामहं वन्द्य ततो महेशं प्रगृह्य चापं प्रविसृज्य भूतान्॥रथाच्च सम्पत्य हरेषुदग्धं क्षिप्तं पुरं तन्मकरालये च ॥८४॥
य इमं रुद्रविजयं पठते विजयावहम् ॥ विजयं तस्य कृत्येषु ददाति वृषभध्वजः॥ ८५ ॥ पितॄणां वापि श्राद्धेषु य इमं श्रावयिष्यति ॥ अनंतं
तस्य पुण्यं स्यात्सर्वयज्ञफलप्रदम् ॥ ८६ ॥ इदं स्वस्त्ययनं पुण्यमिदं पुंसवनं महत् ॥ इदं श्रुत्वा पठित्वा च यान्ति रुद्रसलोकताम् ॥८७॥

इति श्रीमात्स्ये महापुराणे त्रिपुरोपाख्याने त्रिपुरदाहो नाम चत्वारिंशदधिकशततमोऽध्यायः ॥१४०॥ ऋषय ऊचुः ॥ कथं गच्छत्यमावास्यां मासि मासि दिवं नृपः ॥ ऐलः पुरूरवाः सूत तर्पयेत कथं पितॄन् ॥ एतदिच्छामहे श्रोतुं प्रभावं तस्य धीमतः ॥ १ ॥ सूत उवाच ॥तस्य चाहं प्रवक्ष्यामि प्रभावं विस्तरेण तु ॥ ऐलस्य दिवि संयोगं सोमेन सह धीमता ॥ २ ॥ सोमाच्चैवामृतप्राप्तिः पितॄणां तर्पणं तथा ॥ सौम्या बर्हिषदः काव्या अग्निष्वात्तास्तथैव च ॥ ३ ॥ यदा चन्द्रश्च सूर्य्यश्च नक्षत्राणां समागतौ ॥ अमावास्यां निवसत एकस्मिन्नथ मण्डले॥ ४ ॥ तदा स गच्छति द्रष्टुं दिवाकरनिशाकरौ ॥ अमावास्याममावास्यां मातामहपितामहौ ॥ ५ ॥ अभिवाद्य तु तौ तत्र कालापेक्षः स तिष्ठति ॥ प्रचस्कन्द ततः सोममर्चयित्वा परिश्रमात् ॥६॥ ऐलः पुरूरवा विद्वान्मासि श्राद्धचिकीर्षया ॥ ततः स दिवि सोमं वै ह्युपतस्थे पितॄनपि॥७॥ द्विलवं कुहुमात्रं च तावुभौ तु निधाय सः ॥ सिनीवालीप्रमाणाल्पकुहूमात्रव्रतोदये ॥ ८ ॥ कुहूमात्रं पितृद्देशं ज्ञात्वा कुहूमुपासते ॥ तमुपास्य ततः सोमं कलापेक्षी प्रतीक्षते ॥ ९ ॥ स्वधामृतं तु सोमाद्वै वसंस्तेषां च तृप्तये ॥ दशभिः पञ्चभिश्चैव स्वधामृतपरिस्रवैः ॥ कृष्णपक्षभुजां प्रीतिर्दुह्यते परमांशुभिः ॥ १०॥ सद्योऽभिक्षरता तेन सौम्येन मधुना च सः ॥ निवापेष्वथ दत्तेषु पित्र्येण विधिना तु वै ॥११॥ स्वधामृतेन सौम्येन तर्पयामास वै पितॄन् ॥ सौम्या बर्हिषदः काव्या अग्निष्वात्तास्तथैव च ॥ १२ ॥ ऋतुरग्निः स्मृतो विप्रैर्ऋतुं संवत्सरं विदुः ॥ जज्ञिरे ऋतवस्तस्मादृतुभ्यो ह्यार्त्तवाभवन् ॥ १३ ॥ पितरोर्त्तवोऽर्द्धमासा विज्ञेया ऋतुसूनवः ॥ पितामहास्तु ऋतवो ह्यमावास्याब्दसूनवः ॥ प्रपितामहाः स्मृता देवाः पञ्चाब्दा ब्रह्मणः सुताः ॥१४ ॥ सौम्या बर्हिषदः काव्या अग्निष्वात्ता इति त्रिधा ॥ गृहस्था ये तु यज्वानो हविर्यज्ञार्त्तवाश्च ये ॥ स्मृता बर्हिषदस्ते वै पुराणे निश्चयं गताः ॥ १५ ॥ गृहमेधिनश्च यज्वानो अग्निष्वात्तार्त्तवाः स्मृताः ॥ अष्टकापतयः काव्याः पञ्चाब्दांस्तु निबोधत ॥ १६ ॥ तेषु संवत्सरो ह्यग्निः सूर्य्यस्तु परिवत्सरः ॥ सोमस्त्विद्वत्सरश्चैव वायुश्चैवानुवत्सरः ॥ १७ ॥ रुद्रस्तु वत्सरस्तेषां पञ्चाब्दा ये युगात्मकाः ॥ कालेनाधिष्ठितस्तेषु चन्द्रमाः स्रवते सुधाम् ॥ १८ ॥ एते स्मृता देवकृत्याः सोमपाश्चोष्मपाश्च ये ॥ तांस्तेन तर्पयामास यावदासीत्पुरूरवाः ॥ १९ ॥ यस्मात्प्रसूयते सोमो मासि मासि विशेषतः॥ततः स्वधामृतं तद्वै पितॄणां सोमपायिनाम्॥

एतत्तदमृतं सोममवाप मधु चैव हि॥२०॥ततः पीतसुधं सोमं सूर्य्योऽसावेकरश्मिना ॥ आप्यायते सुषुम्नेन सोमं तु सोमपायिनम् ॥२१॥ निःशेषा वै कलाः पूर्वा युगपद्व्यापयन्पुरा ॥ सुषुम्नाप्यायमानस्य भागंभागमहःक्रमात् ॥ २२ ॥ कलाः क्षीयन्ति कृष्णास्ताः शुक्ला ह्याप्याय यन्ति च॥एवं सा सूर्य्यवीर्य्येण चन्द्रस्याप्यायिता तनुः॥२३॥पौर्णमास्यां स दृश्येत शुक्लः सम्पूर्णमण्डलः॥एवमाप्यायितः सोमः शुक्लपक्षेऽप्यहः क्रमात्॥देवैःपीतसुधं सोमं पुरा पश्चात्पिबेद्रविः॥२४॥पीतं पञ्चदशाहं तु रश्मिनैकेन भास्करः॥आप्याययत्सुषुम्नेन भागंभागमहःक्रमात्॥२५॥ सुषुम्नाप्यायमानस्य शुक्ला वर्द्धन्ति वै कलाः ॥ तस्माद्ध्रसन्ति वै कृष्णाः शुक्ला ह्याप्याययन्ति च ॥ २६ ॥ एवमाप्याय्यते सोमः क्षीयते च पुनः पुनः ॥ समृद्धिरेवं सोमस्य पक्षयोः शुक्लकृष्णयोः ॥ २७ ॥ इत्येष पितृमान्सोमः स्मृतस्तद्वत्सुधात्मकः ॥ कान्तः पंचदशैः सार्द्धं सुधामृत परिस्रवैः ॥ २८ ॥ अतः परं प्रवक्ष्यामि पर्वणां सन्धयश्च याः ॥ यथा ग्रथ्नन्ति पर्वाणि आवृत्तादिक्षुवेणुवत् ॥ २९ ॥ तथाब्दमासाः पक्षाश्च शुक्लाः कृष्णास्तु वै स्मृताः ॥ पौर्णमास्यास्तु यो भेदो ग्रन्थयः सन्धयस्तथा ॥ ३० ॥ अर्द्धमासस्य पर्वाणि द्वितीयाप्रभृतीनि च ॥ अग्न्याधानक्रिया यस्मान्नीयन्ते पर्वसन्धिषु॥३१॥ तस्मात्तु पर्वणो ह्यादौ प्रतिपद्यादिसन्धिषु ॥ सायाह्ने अनुमत्याश्च द्वौ लवौ काल उच्यते ॥ लवौ द्वावेव राकायाः कालो ज्ञेयोऽपराह्णिकः॥३२॥प्रकृतिः कृष्णपक्षस्य कालेऽतीतेऽपराह्णिके॥सायाह्ने प्रतिपद्येष स कालः पौर्णमासिकः॥३३॥ व्यतीपाते स्थिते सूर्य्ये लेखादूर्द्ध्वं युगान्तरम् ॥ युगान्तरोदिते चैव चन्द्रे लेखोपरि स्थिते ॥ ३४ ॥ पूर्णमासव्यतीपातौ यदा पश्येत् परस्परम् ॥ तौ तु वै प्रतिपद्यावत्तस्मिन्काले व्यवस्थितौ ॥ ३५ ॥ तत्कालं सूर्य्यमुद्दिश्य दृष्ट्वा संख्यातुमर्हसि ॥ स चैव सत्क्रियाकालः षष्ठः कालोऽभिधीयते ॥ ३६ ॥ पूर्णेन्दुः पूर्णपक्षे तु रात्रिसन्धिषु पूर्णिमा ॥ तस्मादाप्यायते नक्तं पौर्णमास्यां निशाकरः ॥ ३७ ॥ यदान्योन्यवर्ती पाते पूर्णिमां प्रेक्षते दिवा ॥ चन्द्रादित्योऽपराह्ने तु पूर्णत्वात्पूर्णिमा स्मृता ॥ ३८ ॥ यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ॥ तस्मादनुमतिर्नाम पूर्णत्वात्पूर्णिमा स्मृता॥३९॥ अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः ॥ रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः॥४०॥ अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ ॥ एका पंचदशी रात्रिरमावास्या ततः स्मृता ॥ ४१ ॥ उद्दिश्यताममावास्यां यदा दर्श

समागतो ॥ अन्योन्यं चन्द्रसूर्य्यौ तु दर्शनादर्श उच्यते ॥४२॥ द्वौ द्वौ लवावमावास्यां स कालः पर्वसन्धिषु ॥ द्व्यक्षरः कुहुमात्रश्च पर्वकालस्तु स स्मृतः ॥ ४३ ॥ दृष्टचन्द्रा त्वमावास्या मध्याह्नप्रभृतीह वै ॥ दिवा तदूर्द्ध रात्र्यां तु सूर्य्ये प्राप्ते तु चन्द्रमाः ॥ सूर्य्येण सहसोद्गच्छेत्ततः प्रातस्तनात्तु वै ॥ ४४ ॥ समागम्य लवौ द्वौ तु मध्याह्नान्निपतन् रविः ॥ प्रतिपच्छुक्लपक्षस्य चन्द्रमाः सूर्य्यमण्डलात् ॥ ४५॥ निर्म्मुच्यमानयोर्मध्ये तयोर्मण्डलयोस्तु वै ॥ स तदाऽन्वाहुतेः कालो दर्शस्य च वषट्क्रियाः ॥ एतदृतुमुखं ज्ञेयममावास्यां तु पार्वणम् ॥ ४६ ॥ दिवा पर्व त्वमावास्यां क्षीणेन्दौ धवले तु वै ॥ तस्माद्दिवा त्वमावास्यां गृह्यते यो दिवाकरः ॥ ४७ ॥ कुहेति कोकिलेनोक्तं यस्मात्कालात्समाप्यते ॥ तत्कालसंज्ञिता ह्येषा अमावास्या कुहूः स्मृता ॥ ४८ ॥ सिनीवालीप्रमाणं तु क्षीणशेषो निशाकरः ॥ अमावास्यां विशत्यर्कं सिनीवाली तदा स्मृता ॥ ४९ ॥ अनुमतिश्च राका च सिनीवाली कुहूस्तथा ॥ एतासां द्विलवः कालः कुहुमात्रा कुहूः स्मृता ॥ ५० ॥ इत्येष पर्वसन्धीनां कालो वै द्विलवः स्मृतः ॥ पर्वणां तुल्यकालस्तु तुल्याहुतिवषट्क्रियाः ॥ ५१ ॥ चन्द्रसूर्य्यव्यतीपाते समे वै पूर्णिमे उभे ॥ प्रतिपत्प्रतिपन्नस्तु पर्वकालो द्विमात्रकः ॥ ५२ ॥ कालः कुहूसिनीवाल्योः समुद्रो द्विलवः स्मृतः ॥ अर्कानिर्म्मण्डले सोमे पर्वकालः कलाः स्मृताः ॥ ५३ ॥ यस्मादापूर्य्यते सोमः पंचदश्यां तु पूर्णिमा ॥ दशभिः पंचभिश्चैव कलाभिर्दिवसक्रमात् ॥ ५४ ॥ तस्मात्पंचदशे सोमे कला वै नास्ति षोडशी ॥ तस्मात्सोमस्य विप्रोक्तः पंचदश्यां मया क्षयः ॥ ५५॥ इत्येते पितरो देवाः सोमपाः सोमवर्द्धनाः ॥ आर्त्तवा ऋतवोऽथाब्दा देवास्तान्भावयन्ति हि॥५६॥अतः परं प्रवक्ष्यामि पितॄञ्छ्राद्धभुजस्तु ये॥तेषां गतिं च सत्तत्त्वं प्राप्तिं श्राद्धस्य चैव हि ॥५७॥ न मृतानां गतिः शक्या ज्ञातुं वा पुनरागतिः ॥ तपसा हि प्रसिद्धेन किं पुनर्मांसचक्षुषा ॥ ५८ ॥ अत्र देवान्पितॄंश्चैते पितरो लौकिकाः स्मृताः ॥ तेषां ते धर्म्मसामर्थ्यात्स्मृताः सायुज्यगा द्विजैः ॥ ५९ ॥ यदि वाश्रमधर्म्मेण प्रज्ञानेषु व्यवस्थितान् ॥ अन्ये चात्र प्रसीदन्ति श्रद्धायुक्तेषु कर्म्मसु ॥ ६० ॥ ब्रह्मचर्य्येण तपसा यज्ञेन प्रजया भुवि ॥ श्राद्धेन विद्यया चैव चान्नदानेन सप्तधा ॥ ६१ ॥ कर्म्मस्वेतेषु ये सक्ता वर्त्तन्त्यादेहपातनात् ॥ देवैस्ते पितृभिः सार्द्धमूष्मपैः सोमपैस्तथा ॥ स्वर्गता दिवि मोदन्ते पितृमन्त उपासते ॥ ६२ ॥ प्रजा

वर्ता प्रतिद्धेषा उक्ता श्राद्धकृतां च वै ॥ तेषां निवापे दत्तं हि तत्कुलीनैस्तु बान्धवैः ॥ ६३ ॥ मासश्राद्धं हि भुञ्जानास्तेऽप्येते सोमलौकिकाः ॥ एते मनुष्याः पितरो मासश्राद्धभुजस्तु वै ॥ ६४ ॥ तेभ्योऽपरे तु ये त्वन्ये सङ्कीर्णाः कर्म्मयोनिषु ॥ भ्रष्टाश्चाश्रमधर्म्मेषु स्वधास्वाहाविवर्जिताः ॥ ६५ ॥ भिन्ने देहे दुरापन्नाः प्रेतभूता यमक्षये ॥ स्वकर्म्माण्यनुशोचन्तो यातनास्थानमागताः ॥ ६६ ॥ दीर्घाश्चैवातिशुष्काश्च श्मश्रुलाश्च विवाससः ॥ क्षुत्पिपासाभिभूतास्ते विद्रवन्ति त्वितस्ततः ॥ ६७ ॥ सरित्सरस्तडागानि पुष्करिण्यश्च सर्वशः ॥ परान्नान्यभिकांक्षन्तः काल्यमाना इतस्ततः ॥ ६८ ॥ स्थानेषु पात्यमाना ये यातनास्थेषु तेषु वै ॥ शाल्मल्यां वैतरण्यां च कुम्भीपाकेऽद्ववालुके ॥ ६९ ॥ असिपत्रवने चैव पात्यमानाः स्वकर्म्मभिः ॥ तत्रस्थानां तु तेषां वै दुःखितानामशायिनाम् ॥ ७० ॥ तेषां लोकान्तरस्थानां बान्धवैर्नामगोत्रतः ॥ भूमावसव्यं दर्भेषु दत्ताः पिण्डास्त्रयस्तु वै ॥ प्राप्तास्तु तर्पयन्त्येव प्रेतस्थानेष्वधिष्ठितान् ॥ ७१ ॥ अप्राप्ता यातनास्थानं प्रभ्रष्टा ये च पंचधा ॥ पश्चाद्ये स्थावरान्ते वै भूतानीके स्वकर्म्मभिः ॥ ७२ ॥ नानारूपासु जातीनां तिर्य्यग्योनिषु मूर्त्तिषु ॥ यदाहारा भवन्त्येते तासु तास्विह योनिषु ॥ ७३ ॥ तस्मिंस्तस्मिंस्तदाहारे श्राद्धं दत्तं तु प्रीणयेत् ॥ काले न्यायागतं पात्रे विधिना प्रतिपादितम् ॥ प्राप्नुवन्त्यन्नमादत्तं यत्र यत्रावतिष्ठति ॥ ७४ ॥ यथा गोषु प्रनष्टासु वत्सो विन्दति मातरम् ॥ तथा श्राद्धेषु दृष्टान्तो मन्त्रः प्रापयते तु तम् ॥ ७५ ॥ एवं ह्यविकलं श्राद्धं श्रद्धादत्तं मनुर्ब्रवीत ॥ सनत्कुमारः प्रोवाच पश्यन्दिव्येन चक्षुषा ॥ ७६ ॥ गतागतज्ञः प्रेतानां प्राप्तिं श्राद्धस्य चैव हि ॥ कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ॥ ७७ ॥ इत्येते पितरो देवा देवाश्च पितरश्च वै ॥ अन्योन्यपितरो ह्येते देवाश्च पितरो दिवि ॥ ७८ ॥ एते तु पितरो देवा मनुष्याः पितरश्च ये ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ ७९ ॥ इत्येष विषयः प्रोक्तः पितॄणां सोमपायिनाम् ॥ एतत्पितृमहत्त्वं हि पुराणे निश्चयंगतम् ॥ ८० ॥ इत्येष सोमसूर्याभ्यामैलस्य च समागमः ॥ अवाप्तिं श्रद्धया चैव पितॄणां चैव तर्पणम् ॥ ८१ ॥ पर्वणां चैव यः कालो यातनास्थानमेव च ॥ समासात्कीर्त्तितस्तुभ्यं सर्ग एष सनातनः ॥ ८२ ॥ वैरूप्यं येन तत्सर्वं कथितं त्वेकदेशिकम् ॥ अशक्यं परिसंख्यातुं श्रद्धेयं भूतिमिच्छता ॥ ८३ ॥ स्वायम्भुवस्य देवस्य एष

सर्गो मयेरितः ॥ विस्तरेणानुपूर्व्याच्च भूयः किं कथयामि वः ॥ ८४ ॥ इति श्रीमात्स्ये महापुराणे मन्वन्तरानुकीर्त्तने श्राद्धानुकीर्त्तनं नामैक चत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ छ ॥ ऋषय ऊचुः ॥ चतुर्युगानि यानि स्युः पूर्वे स्वायम्भुवेऽन्तरे ॥ एषां निसर्गं संख्यां च श्रोतु मिच्छाम विस्तरात् ॥ १ ॥ सूत उवाच ॥ पृथिवीद्युप्रसङ्गेन मया तु प्रागुदाहृतम् ॥ एतच्चतुर्युगं त्वेवं तद्वक्ष्यामि निबोधत ॥ तत्प्रमाणं प्रसंख्याय विस्तराच्चैव कृत्स्नशः ॥२॥ लौकिकेन प्रमाणेन निष्पाद्याब्दं तु मानुषम् ॥ तेनापीह प्रसंख्याय वक्ष्यामि तु चतुर्युगम् ॥ ३॥ काष्ठा निमेषा दश पंच चैव त्रिंशच्च काष्ठां गणयेत्कलां तु ॥ त्रिंशत्कलाश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥ ४ ॥ अहोरात्रे विभजते सूर्यो मानुषलौकिके ॥ रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः ॥५॥ पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ॥ कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ॥ ६ ॥ त्रिंशद्ये मानुषा मासाः पैत्रो मासः स उच्यते ॥ शतानि त्रीणि मासानां षष्ट्या चाभ्यधिकानि तु ॥ पैत्रः संवत्सरो ह्येष मानुषेण विभाव्यते ॥ ७॥ मानुषेणैव मानेन वर्षाणां यच्छतं भवेत्॥ पितॄणां तानि वर्षाणि संख्यातानि तु त्रीणि वै॥ दश च द्व्यधिका मासाः पितृसंख्येह कीर्त्तिता ॥८॥ लौकिकेन प्रमाणेन अब्दो यो मानुषः स्मृतः ॥ एतद्दिव्यमहोरात्रमित्येषा वैदिकी श्रुतिः ॥९॥ दिव्ये रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ॥ अहस्तु यदुदक्चैव रात्रिर्या दक्षिणायनम् ॥ एते रात्र्यहनी दिव्ये प्रसंख्याते तयोः पुनः ॥ १० ॥ त्रिंशद्यानि तु वर्षाणि दिव्यो मासस्तु स स्मृतः ॥ मानुषाणां शतं यच्च दिव्या मासास्त्रयस्तु वै ॥ तथैव सह संख्यातो दिव्य एष विधिः स्मृतः ॥ ११ ॥ त्रीणि वर्षशतान्येवं षष्टिर्वर्षास्तथैव च ॥ दिव्यः संवत्सरो ह्येष मानुषेण प्रकीर्त्तितः ॥ १२ ॥ त्रीणि वर्षसहस्राणि मानुषेण प्रमाणतः ॥ त्रिंशदन्यानि वर्षाणि स्मृतः सप्तर्षिवत्सरः ॥ १३ ॥ नव यानि सहस्राणि वर्षाणां मानुषाणि च ॥ वर्षाणि नवतिश्चैव ध्रुवसंवत्सरः स्मृतः ॥ १४ ॥ षट्त्रिंशत्तु सहस्राणि वर्षाणां मानुषाणि च ॥ षष्टिश्चैव सहस्राणि संख्यातानि तु संख्यया ॥ दिव्यं वर्षसहस्रं तु प्राहुः संख्याविदो जनाः ॥१५॥ इत्येतदृषिभिर्गीतं दिव्यया संख्यया द्विजाः ॥ दिव्येनैव प्रमाणेन युगसंख्या प्रकल्पिता ॥ १६ ॥ चत्वारि भारते वर्षे युगानि ऋषयोऽब्रुवन् ॥ कृतं त्रेता द्वापरं च कलिश्चैवं चतुर्युगम् ॥ १७ ॥ पूर्वं कृतयुगं नाम ततस्त्रेताभिधीयते ॥ द्वापरं च कलिश्चैव युगानि परिकल्पयेत् ॥ १८ ॥

चत्वार्य्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ॥ तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ १९ ॥ इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ॥ एकपादे निवर्त्तन्ते सहस्राणि शतानि च॥२०॥ त्रेता त्रीणि सहस्राणि युगसंख्याविदो विदुः ॥ तस्यापि त्रिशती सन्ध्या सन्ध्यांशः सन्ध्यया समः ॥ २१ ॥ द्वे सहस्रे द्वापरं तु सन्ध्यांशो तु चतुःशतम् ॥ सहस्रमेकं वर्षाणां कलिरेव प्रकीर्त्तितः ॥ द्वे शते च तथान्ये च सन्ध्या सन्ध्यांशयोः स्मृते ॥ २२ ॥ एषा द्वादशसाहस्री युगसंख्या तु संज्ञिता ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुष्टयम् ॥ २३ ॥ तत्र संवत्सराः सृष्टा मानुषास्तान्निबोधत ॥ नियुतानि दश द्वे च पंच चैवात्र संख्यया ॥ अष्टाविंशत्सहस्राणि कृतं युगमथोच्यते ॥ २४ ॥ प्रयुतं तु तथा पूर्णं द्वे चान्ये नियुते पुनः ॥ षण्णवतिसहस्राणि संख्यातानि च संख्यया ॥ त्रेतायुगस्य संख्यैषा मानुषेण तु संज्ञिता ॥ २५ ॥ अष्टौ शत सहस्राणि वर्षाणां मानुषाणि तु ॥ चतुःषष्टिसहस्राणि वर्षाणां द्वापरं युगम् ॥ २६ ॥ चत्वारि नियुतानि स्युर्वर्षाणि तु कलिर्युगम् ॥ द्वात्रिंशच्च तथान्यानि सहस्राणि तु संख्यया ॥ एतत्कलियुगं प्रोक्तं मानुषेण प्रमाणतः ॥ २७ ॥ एषा चतुर्युगावस्था मानुषेण प्रकीर्त्तिता ॥ चतुर्युगस्य संख्याता सन्ध्या सन्ध्यांशकैः सह ॥ २८ ॥ एषा चतुर्युगाख्या तु साधिका त्वेकसप्ततिः ॥ कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ॥ २९ ॥ मन्वन्तरस्य संख्या तु मानुषेण निबोधत॥एकत्रिंशत् तथा कोट्यः संख्याताः संख्यया द्विजैः॥३०॥तथा शतसहस्राणि दश चान्यानि भागशः॥ सहस्राणि तु द्वात्रिंशच्छतान्यष्टाधिकानि च ॥ ३१ ॥ अशीतिश्चैव वर्षाणि मासाश्चैवाधिकास्तु षट् ॥ मन्वन्तरस्य संख्यैषा मानुषेण प्रकीर्त्तिता ॥ ३२ ॥ दिव्येन च प्रमाणेन प्रवक्ष्याम्यन्तरं मनोः ॥ सहस्राणां शतान्याहुः स च. वै परिसंख्यया ॥ ३३ ॥ चत्वारिंशत्सहस्राणि मनोरन्तरमुच्यते ॥ मन्वन्तरस्य कालस्तु युगैः सह प्रकीर्त्तितः ॥ ३४ ॥ एषा चतुर्युगाख्या तु साधिका ह्येकसप्ततिः ॥ क्रमेण परिवृत्ता सा मनोरन्तरमुच्यते ॥ ३५ ॥ एतच्चतुर्दशगुणं कल्पमाहुस्तु तद्विदः ॥ ततस्तु प्रलयः कृत्स्नः स तु सम्प्रलयो महान् ॥ ३६ ॥ कल्पप्रमाणो द्विगुणो यथा भवति संख्यया ॥ चतुर्युगाख्या व्याख्याता कृतं त्रेतायुगं च वै ॥३७॥त्रेतासृष्टिं प्रवक्ष्यामि द्वापरं कलिमेव च॥ युगपत्समवेतौ द्वौ द्विधा वक्तुं न शक्यते ॥ ३८ ॥ क्रमागतं मयाप्येतत्तुभ्यं नोक्तं युगद्वयम् ॥ ऋषिवंशप्रसङ्गेन व्याकुलत्वात्तथाक्रमात् ॥ ३९ ॥ नोक्तं

त्रेतायुगे शेषं तद्वक्ष्यामि निबोधत ॥ अथ त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ये ॥ श्रौतं स्मार्त्तं ब्रुवन्धर्म्मं ब्रह्मणा तु प्रचोदिताः ॥ ४० ॥ दाराग्निहोत्रसम्बन्धमृग्यजुःसामसंहिताः ॥ इत्यादिबहुलं श्रौतं धर्म्मं सप्तर्षयोऽब्रुवन् ॥ ४१ ॥ परम्परागतं धर्म्मं स्मार्त्तं त्वाचारलक्षणम् ॥ वर्णाश्रमाचारयुतं मनुः स्वायम्भुवोऽब्रवीत् ॥ ४२ ॥ सत्येन ब्रह्मचर्य्येण श्रुतेन तपसा तथा ॥ तेषां सुतप्ततपसामार्षेणानुक्रमेण ह ॥ ४३ ॥ सप्तर्षीणां मनोश्चैव आदौ त्रेतायुगे ततः ॥ अबुद्धिपूर्वकं तेन सकृत्पूर्वकमेव च ॥ ४४ ॥ अभिवृत्तास्तु ते मन्त्रा दर्शनैस्तारकादिभिः ॥ आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयम् ॥ ४५ ॥ प्रमाणेष्वथ सिद्धानामन्येषां च प्रवर्त्तते ॥ मन्त्रयोगो व्यतीतेषु कल्पेष्वथ सहस्रशः ॥ ते मन्त्रा वै पुनस्तेषां प्रतिमायामुपस्थिताः ॥ ४६ ॥ ऋचो यजूंषि सामानि मन्त्राश्चाथर्वणास्तु ये ॥ सप्तर्षिभिश्च ये प्रोक्ताः स्मार्त्तं तु मनुरब्रवीत् ॥ ४७ ॥ त्रेतादौ संहता वेदाः केवलं धर्म्मसेतवः ॥ संरोधादायुषश्चैव व्यस्यन्ते द्वापरे च ते ॥ ऋषयस्तपसा वेदानहोरात्रमधीयत ॥ ४८ ॥ अनादिनिधना दिव्याः पूर्वं प्रोक्ताः स्वयम्भुवा ॥ स्वधर्म्मसंवृताः साङ्गा यथाधर्म्मं युगे युगे ॥ विक्रियन्ते स्वधर्मं तु वेदवादाद्यथायुगम् ॥ ४९ ॥ आरम्भयज्ञः क्षत्रस्य हविर्यज्ञा विशः स्मृताः ॥ परिचारयज्ञा शूद्राश्च जपयज्ञाश्च ब्राह्मणाः ॥ ५० ॥ ततः समुदिता वर्णास्त्रेतायां धर्म्मशालिनः ॥ क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनश्च वै ॥ ५१ ॥ ब्राह्मणैश्च विधीयन्ते क्षत्रियाः क्षत्रियैर्विशः ॥ वैश्याञ्छूद्रानुवर्त्तन्ते शूद्रान् परमनुग्रहात् ॥ ५२ ॥ शुभाः प्रकृतयस्तेषां धर्म्मा वर्णाश्रमाश्रयाः ॥ सङ्कल्पितेन मनसा वाचा वा हस्तकर्म्मणा ॥ त्रेतायुगे ह्यविकल्पे कर्म्मारम्भः प्रसिद्ध्यति ॥ ५३ ॥ आयू रूपं बलं मेधा आरोग्यं धर्म्मशीलता ॥ सर्वसाधारणं ह्येतदासीत् त्रेतायुगे तु वै॥५४॥ वर्णाश्रमव्यवस्थानमेषां ब्रह्मा तथाऽकरोत् ॥ संहिताश्च तथा मन्त्रा आरोग्यं धर्म्मशीलता॥५५ ॥ संहिताश्च तथा मन्त्रा ऋषिभिर्ब्रह्मणः सुतैः ॥ यज्ञः प्रवर्त्तितश्चैव तदा ह्येव तु दैवतैः ॥ ५६ ॥ यामैः शुक्लैर्जयैश्चैव सर्वसाधनसम्भृतैः ॥ विश्वसृड्भिस्तथा सार्द्धं देवेन्द्रेण महौजसा ॥ स्वायम्भुवेऽन्तरे देवैस्ते यज्ञाः प्राक् प्रवर्त्तिताः ॥ ५७ ॥ सत्यं जपस्तपो दानं पूर्वधर्म्मो य उच्यते ॥ यदा धर्म्मस्य ह्रसते शाखा धर्मस्य वर्द्धते ॥ ५८ ॥ जायन्ते च तदा शूरा आयुष्मन्तो महाबलाः ॥ न्यस्तदण्डा महायोगा

यज्वानो ब्रह्मवादिनः ॥ ५९ ॥ पद्मपत्रायताक्षाश्च पृथुवक्त्राः सुतेजसः । सिंहोरस्का महासत्त्वा मत्तमातङ्गगामिनः ॥ ६० ॥ महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः ॥ सर्वलक्षणपूर्णास्ते न्यग्रोधपरिमण्डलाः ॥ ६१ ॥ न्यग्रोधौ तु स्मृतौ बाहू व्यामो न्यग्रोध उच्यते ॥ व्यामेन तूच्छ्रयो यस्य अत ऊर्द्ध्वं तु देहिनः ॥ समुच्छ्रयः परीणाहो न्यग्रोधपरिमण्डलः ॥ ६२ ॥ चक्रं रथो मणिर्भार्य्या निधिरश्वो गजस्तथा ॥ प्रोक्तानि सप्त रत्नानि पूर्वं स्वायम्भुवेऽन्तरे ॥ ६३ ॥ विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्त्तिनः ॥ मन्वन्तरेषु सर्वेषु ह्यतीतानागतेषु वै ॥ ६४ ॥ भूतभव्यानि यानीह वर्त्तमानानि यानि च ॥ त्रेतायुगानि तेष्वत्र जायन्ते चक्रवर्त्तिनः ॥ ६५ ॥ भद्राणीमानि तेषां च विभाव्यन्ते महीक्षिताम् ॥ अत्यद्भुतानि चत्वारि बलं धर्म्मं सुखं धनम् ॥ ६६ ॥ अन्योन्यस्याविरोधेन प्राप्यन्ते नृपतेः समम् ॥ अर्थो धर्म्मश्च कामश्च यशो विजय एव च ॥ ६७ ॥ ऐश्वर्य्येणाणिमाद्येन प्रभुशक्तिबलान्विताः ॥ श्रुतेन तपसा चैव ऋषींस्तेऽभिभवन्ति हि ॥ ६८ ॥ बलेनाभिभवन्त्येते तेन दानवमानवान् ॥ लक्षणैश्चैव जायन्ते शरीरस्थैरमानुषैः ॥ ६९ ॥ केशाः स्थिता ललाटेन जिह्वा च परिमार्ज्जनी ॥ श्यामप्रभाश्चतुर्दंष्ट्राः श्रवणाश्चोर्द्ध्वरेतसः ॥ ७० ॥ आजानुबाहवश्चैव तालहस्तौ वृषाकृती ॥ परिणाहप्रमाणाभ्यां सिंहस्कन्धाश्च मेधिनः ॥ ७१ ॥ पादयोश्चक्रमत्स्यौ तु शङ्खपद्मे च हस्तयोः ॥ पंचाशीतिसहस्राणि जीवन्ति ह्यजरामयाः ॥ ७२ ॥ असङ्गा गतयस्तेषां चतस्रश्चक्रवर्त्तिनाम् ॥ अन्तरिक्षे समुद्रेषु पाताले पर्वतेषु च ॥ ७३ ॥ इज्या दानं तपः सत्यं त्रेताधर्म्मास्तु वै स्मृताः ॥ तदा प्रवर्त्तते धर्म्मो वर्णाश्रमविभागशः ॥ मर्य्यादास्थापनार्थं च दण्डनीतिः प्रवर्त्तते ॥ ७४ ॥ हृष्टपुष्टा जनाः सर्वे अरोगाः पूर्णमानसाः ॥ एको वेदश्चतुष्पादस्त्रेतायां तु विधिः स्मृतः ॥ त्रीणि वर्षसहस्राणि जीवन्ते तत्र ताः प्रजाः ॥ ७५ ॥ पुत्रपौत्रसमाकीर्णा म्रियन्ते च क्रमेण ताः ॥ एष त्रेतायुगे भावस्त्रेतासंख्यां निबोधत ॥ ७६ ॥ त्रेतायुगस्वभावेन सन्ध्यापादेन वर्त्तते ॥ सन्ध्यापादः स्वभावाच्च योंऽशः पादेन तिष्ठति ॥ ७७ ॥ इति श्रीमात्स्ये महापुराणे मन्वन्तरानुकल्पो नाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ऋषय ऊचुः ॥ कथं त्रेतायुगमुखे यज्ञस्यासीत्प्रवर्त्तनम् ॥ पूर्वे स्वायम्भुवे सर्गे यथावत्प्रब्रवीहि नः ॥ १ ॥ अन्तर्हितायां सन्ध्यायां सार्द्धं कृतयुगेन हि ॥ कालाख्यायां प्रवृत्तायां प्राप्ते त्रेतायुगे तदा ॥ २ ॥

ओषधीषु च जातासु प्रवृत्ते वृष्टिसर्जने ॥ प्रतिष्ठितायां वार्त्तायां ग्रामेषु च पुरेषु च ॥ ३ ॥ वर्णाश्रमप्रतिष्ठानं कृत्वा मन्त्रैश्च तैः पुनः ॥ संहितास्तु सुसंहृत्य कथं यज्ञः प्रवर्त्तितः ॥ एतच्छ्रुत्वाब्रवीत्सूतः श्रूयतां तत्प्रचोदितम् ॥४॥ सूत उवाच ॥ मन्त्रान्वै योजयित्वा तु इहामुत्र च कर्मसु ॥ तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्त्तयत्प्रभुः ॥५॥ दैवतैः सह संहृत्य सर्वसाधनसंवृतः ॥ तस्याश्वमेधे वितते समाजग्मुर्महर्षयः ॥६॥ यज्ञकर्मण्यवर्त्तन्त कर्मण्यग्रे तथर्त्विजः ॥ हूयमाने देवहोत्रे अग्नौ बहुविधं हविः ॥७ ॥ सम्प्रतीतेषु देवेषु सामगेषु च सुस्वरम् ॥ परिक्रान्तेषु लघुषु अध्वर्य्युपुरुषेषु च ॥ ८ ॥ आलब्धेषु च मध्ये तु तथा पशुगणेषु वै ॥ आहूतेषु च देवेषु यज्ञभुक्षु ततस्तदा ॥ ९ ॥ य इन्द्रियात्मका देवा यज्ञभागभुजस्तु ते ॥ तान्यजन्ति तदा देवाः कल्पादिषु भवन्ति ये ॥ १० ॥ अध्वर्य्युप्रैषकाले तु व्युत्थिता ऋषयस्तथा ॥ महर्षयश्च तान् दृष्ट्वा दीनान् पशुगणांस्तदा ॥ विश्वभुजं ते त्वपृच्छन् कथं यज्ञविधिस्तव ॥ ११ ॥ अधर्म्मो बलवानेष हिंसा धर्म्मेप्सया तव ॥ नवः पशुविधिस्त्विष्टस्तव यज्ञे सुरोत्तम ॥ १२ ॥ अधर्मो धर्मघाताय प्रारब्धः पशुभिस्त्वया ॥ नायं धर्मो ह्यधर्मोऽयं न हिंसा धर्म उच्यते॥ आगमेन भवान् धर्मं प्रकरोतु यदीच्छति ॥ १३ ॥ विधिदृष्टेन यज्ञेन धर्मेणाव्यसनेन तु ॥ यज्ञबीजैः सुरश्रेष्ठ त्रिवर्गपरिमोषितैः ॥ १४ ॥ एष यज्ञो महानिन्द्र स्वयम्भुविहितः पुरा ॥ एवं विश्वभुगिन्द्रस्तु ऋषिभिस्तत्त्वदर्शिभिः ॥ उक्तो न प्रतिजग्राह मानमोहसमन्वितः ॥ १५ ॥ तेषां विवादः सुमहान् जज्ञे इन्द्रमहर्षिणाम् ॥ जङ्गमैः स्थावरैः केन यष्टव्यमिति चोच्यते ॥ १६ ॥ ते तु खिन्ना विवादेन शक्त्या युक्ता महर्षयः ॥ सन्धाय सममिन्द्रेण पप्रच्छुः खचरं वसुम् ॥ १७ ॥ ऋषय ऊचुः ॥ महाप्राज्ञ त्वया दृष्टः कथं यज्ञविधिर्नृप ॥ औत्तानपादे प्रब्रूहि संशयं नस्तुद प्रभो ॥ १८ ॥ सूत उवाच ॥ श्रुत्वा वाक्यं वसुस्तेषामविचार्य बलाबलम् ॥ वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह ॥ १९ ॥ यथोपनीतैर्यष्टव्यमिति होवाच पार्थिवः ॥ यष्टव्यं पशुभिर्मेध्यैरथ मूलफलैरपि ॥ २० ॥ हिंसा स्वभावो यज्ञस्य इति मे दर्शनागमः ॥ तथैते भाविता मन्त्रा हिंसालिङ्गा महर्षिभिः ॥ २१ ॥ दीर्घेण तपसा युक्तैस्तारकादिनिदर्शिभिः ॥ तत्प्रमाणं मया चोक्तं तस्माच्छमितुमर्हथ ॥२२॥ यदि प्रमाणं स्वान्येव मन्त्रवाक्यानि वो द्विजाः ॥ तथा प्रवर्त्ततां यज्ञो ह्यन्यथा माऽनृतं वचः ॥ २३ ॥ एवं कृतोत्तरास्ते तु युज्यात्मानं ततो

धिया ॥ अवश्यम्भाविनं दृष्ट्वा तमधो ह्यशपंस्तदा ॥ २४ ॥ इत्युक्तमात्रो नृपतिः प्रविवेश रसातलम् ॥ ऊर्द्ध्वचारी नृपो भूत्वा रसातलचरोऽभवत् ॥ २५ ॥ वसुधातलचारी तु तेन वाक्येन सोऽभवत् ॥ धर्माणां संशयच्छेत्ता राजा वसुरधो गतः ॥ २६ ॥ तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशयः ॥ बहुधारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ॥ २७ ॥ तस्मान्न निश्चयाद्वक्तुं धर्मः शक्यो हि केनचित् ॥ देवानृषीनुपादाय स्वायम्भुवमृते मनुम् ॥ २८ ॥ तस्मान्न हिंसा यज्ञे स्याद्यदुक्तमृषिभिः पुरा ॥ ऋषिकोटिसहस्राणि स्वैस्तपोभि र्दिवं गताः ॥ २९ ॥ तस्मान्न हिंसायज्ञं च प्रशंसन्ति महर्षयः ॥ उञ्छो मूलं फलं शाकमुदपात्रं तपोधनाः ॥३० ॥ एतद्दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ॥ अद्रोहश्चाप्यलोभश्च दमो भूतदया शमः ॥३१॥ब्रह्मचर्यं तपः शौचमनुक्रोशं क्षमा धृतिः ॥ सनातनस्य धर्मस्य मूलमेव दुरासदम् ॥ ३२ ॥ द्रव्यमन्त्रात्मको यज्ञस्तपश्च समतात्मकम्॥यज्ञैश्च देवानाप्नोति वैराजं तपसा पुनः॥ ३३॥ब्रह्मणः कर्मसंन्यासाद्वैराग्यात्प्रकृतेर्लयम्॥ज्ञानात्प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः॥ ३४॥एवं विवादः सुमहान्यज्ञस्यासीत्प्रवर्त्तने ॥ ऋषीणां देवतानां च पूर्वे स्वायम्भुवेऽन्तरे ॥३५॥ततस्ते ऋषयो दृष्ट्वा हृतं धर्मं बलेन तु ॥ वसोर्वाक्यमनादृत्य जग्मुस्ते वै यथागतम् ॥ ३६ ॥ गतेषु ऋषिसंघेषु देवा यज्ञमवाप्नुयुः ॥ श्रूयन्ते हि तपःसिद्धा ब्रह्मक्षत्रादयो नृपाः ॥३७॥ प्रियव्रतोत्तानपादौ ध्रुवो मेधातिथिर्वसुः ॥ सुधामा विरजाश्चैव शंखपाद्राजसस्तथा ॥३८॥ प्राचीनबर्हिः पर्जन्यो हविर्द्धानादयो नृपाः ॥ एते चान्ये च बहवस्ते तपोभिर्दिवं गताः ॥ ३९ ॥ राजर्षयो महात्मानो येषां कीर्त्तिः प्रतिष्ठिता ॥ तस्माद्विशिष्यते यज्ञात्तपः सर्वैस्तु कारणैः ॥४० ॥ ब्रह्मणा तपसा सृष्टं जगद्विश्वमिदं पुरा ॥ तस्मान्नाप्नोति तद्यज्ञात्तपो मूलमिदं स्मृतम् ॥४१॥ यज्ञप्रवर्त्तनं ह्येवमासीत्स्वायम्भुवेऽन्तरे ॥ तदाप्रभृति यज्ञोऽयं युगैः सार्द्धं प्रवर्त्तितः ॥ ४२ ॥ इति श्रीमात्स्ये महापुराणे मन्वन्तरानुकल्पे देवर्षिसंवादो नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥१४३॥छ॥सूत उवाच ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि द्वापरस्य विधिं पुनः ॥ तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते ॥१॥ द्वापरादौ प्रजानां तु सिद्धिस्त्रेतायुगे तु या ॥ परिवृत्ते युगे तस्मिंस्ततः सा वै प्रणश्यति ॥२ ॥ ततः प्रवर्त्तते तासां प्रजानां द्वापरे पुनः ॥ लोभो धृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ॥ ३ ॥ प्रध्वंसश्चैव वर्णानां कर्म्मणां तु विपर्ययः ॥ याञ्चा वधः परो दण्डो मानो दर्पोऽ

क्षमा बलम् ॥ ४ ॥ तथा रजस्तमो भूयः प्रवृत्ते द्वापरे पुनः ॥ आद्ये कृते नाधर्म्मोऽस्ति स त्रेतायां प्रवर्त्तितः ॥ ५ ॥ द्वापरे व्याकुलो भूत्वा प्रणश्यति कलौ पुनः ॥ वर्णानां द्वापरे धर्म्माः संकीर्यन्ते तथाऽऽश्रमाः॥६॥द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतिस्मृतौ ॥ द्विधा श्रुतिः स्मृतिश्चैव निश्चयो नाधिगम्यते ॥ ७ ॥ अनिश्चयावगमनाद्धर्मतत्त्वं न विद्यते ॥ धर्मतत्त्वे ह्यविज्ञाते मतिभेदस्तु जायते॥ ८ ॥परस्परं विभिन्नास्ते दृष्टीनां विभ्रमेण तु ॥ अतो दृष्टिविभिन्नैस्तैः कृतमत्याकुलं त्विदम् ॥ ९ ॥ एको वेदश्चतुष्पादः संहृत्य तु पुनः पुनः ॥ संक्षेपादायुषश्चैव व्यस्यते द्वापरेष्विह ॥१०॥ वेदश्चैकश्चतुर्द्धा तु व्यस्यते द्वापरादिषु ॥ ऋषिपुत्रैःपुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ॥ ११ ॥ ते तु ब्राह्मणविन्यासैः स्वरक्रमविपर्ययैः ॥ संहृता ऋग्यजुःसाम्नां संहितास्तैर्महर्षिभिः ॥ १२ ॥ सामान्याद्वैकृताच्चैव दृष्टिभिन्नैः क्वचित्क्वचित् ॥ ब्राह्मणं कल्पसूत्राणि भाष्यविद्यास्तथैव च ॥ १३ ॥ अन्ये तु प्रस्थितास्तान्वै केचित्तान्प्रत्यवस्थिताः ॥ द्वापरेषु प्रवर्त्तन्ते भिन्नार्थैस्तैः स्वदर्शनैः ॥ १४॥ एकमाध्वर्यवं पूर्वमासीद्द्वैधं तु तत्पुनः ॥ सामान्यविपरीतार्थैः कृतं शास्त्राकुलं त्विदम्॥१५॥ आध्वर्यवं च प्रस्थानैर्बहुधा व्याकुलीकृतम् ॥ तथैवाथर्वणां साम्नां विकल्पैः स्वस्य संक्षयैः ॥ १६ ॥ व्याकुलो द्वापरेष्वर्थः क्रियते भिन्नदर्शनैः ॥ द्वापरे सन्निवृत्ते ते वेदा नश्यन्ति वै कलौ ॥ १७ ॥ तेषां विपर्ययोत्पन्ना भवन्ति द्वापरे पुनः ॥ अदृष्टिर्मरणं चैव तथैव व्याध्युपद्रवाः ॥१८॥ वाङ्मनःकर्मभिर्दुःखैर्निर्वेदो जायते ततः ॥ निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ १९ ॥ विचारणायां वैराग्यं वैराग्याद्दोषदर्शनम् ॥ दोषाणां दर्शनाच्चैव ज्ञानोत्पत्तिस्तु जायते ॥ २० ॥ तेषां मेधाविनां पूर्वं मर्त्ये स्वायम्भुवेऽन्तरे ॥ उत्पत्स्यन्तीह शास्त्राणां द्वापरे परिपन्थिनः ॥ २१ ॥ आयुर्वेदविकल्पाश्च अङ्गानां ज्योतिषस्य च ॥ अर्थशास्त्रविकल्पाश्च हेतुशास्त्रविकल्पनम् ॥ २२ ॥ प्रक्रिया कल्पसूत्राणां भाष्यविद्याविकल्पनम् ॥ स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक् पृथक् ॥ २३ ॥ द्वापरेष्वभिवर्त्तन्ते मतिभेदास्तथा नृणाम् ॥ मनसा कर्मणा वाचा कृच्छ्राद्वार्त्ता प्रसिद्ध्यति ॥ २४ ॥ द्वापरे सर्वभूतानां कालः क्लेशपरः स्मृतः ॥ लोभो धृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ॥ २५ ॥ वेदशास्त्रप्रणयनं वर्णानां सङ्करस्तथा ॥ वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥ २६ ॥ पूर्णे वर्षसहस्रे द्वे परमायुस्तदा नृणाम् ॥ निःशेषे द्वापरे तस्मिंस्तस्य

सन्ध्या तु पादतः ॥ २७ ॥ गुणहीनास्तु तिष्ठन्ति धर्म्मस्य द्वापरस्य तु ॥ तथैव सन्ध्या पादेन अंशस्तस्यां प्रतिष्ठितः ॥ २८ ॥ द्वापरस्य तु पर्य्यायाः पुष्यस्य च निबोधत ॥ द्वापरस्यांशशेषे तु प्रतिपत्तिः कलेरथ ॥ २९ ॥ हिंसा स्तेयानृतं माया दम्भश्चैव तपस्विनाम् । एते स्वभावाः पुष्यस्य साधयन्ति च ताः प्रजाः ॥ ३० ॥ एष धर्म्मः स्मृतः कृत्स्नो धर्म्मश्च परिहीयते ॥ मनसा कर्म्मणा वाचा वार्त्ताः सिद्ध्यन्ति वा न वा ॥ ३१ ॥ कलिः प्रमारको रोगः सततं चापि क्षुद्भयम् ॥ अनावृष्टिभयं चैव देशानां च विपर्य्ययः ॥ ३२ ॥ न प्रमाणे स्थितिर्ह्यस्ति पुष्ये घोरे युगे कलौ ॥ गर्भस्थो म्रियते कश्चिद्यौवनस्थस्तथापरः ॥ ३३ ॥ स्थावीर्य्ये मध्यकौमारे म्रियन्ते च कलौ प्रजाः ॥ अल्पतेजो बलाः पापा महाकोपा ह्यधार्म्मिकाः ॥ ३४ ॥ अनृतव्रतलुब्धाश्च पुष्ये चैव प्रजाः स्थिताः ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ ३५ ॥ विप्राणां कर्म्मदोषैस्तैः प्रजानां जायते भयम् ॥ हिंसा मानस्तथेर्ष्या च क्रोधोऽसूयाऽक्षमाऽधृतिः ॥ ३६ ॥ पुष्ये भवन्ति जन्तूनां लोभो मोहश्च सर्वशः ॥ संक्षोभो जायतेऽत्यर्थं कलिमासाद्य वै युगम् ॥ ३७ ॥ नाधीयन्ते तथा वेदा न यजन्ते द्विजातयः ॥ उत्सीदन्ति तथा चैव वैश्यैः सार्द्धं तु क्षत्रियाः ॥३८॥ शूद्राणां मन्त्रयोनिस्तु सम्बन्धो ब्राह्मणैः सह ॥ भवतीह कलौ तस्मिञ्छयनासनभोजनैः ॥ ३९ ॥ राजानः शूद्रभूयिष्ठाः पाषण्डानां प्रवृत्तयः ॥ काषायिणश्च निष्कच्छास्तथा कापालिनश्च ह ॥ ४० ॥ ये चान्ये देवव्रतिनस्तथा ये धर्म्मदूषकाः ॥ दिव्यवृत्ताश्च ये केचिद्वृत्त्यर्थं श्रुतिलिङ्गिनः ॥४१॥ एवंविधाश्च ये केचिद्भवन्तीह कलौ युगे ॥ अधीयते तदा वेदाञ्छूद्रा धर्म्मार्थकोविदाः ॥४२॥ यजन्ति ह्यश्वमेधैस्तु राजानः शूद्रयोनयः ॥ स्त्रीबालगोवधं कृत्वा हत्वा चैव परस्परम् ॥ ४३ ॥ उपहृत्य तथान्योन्यं साधयन्ति तदा प्रजाः ॥ दुःखप्रचुरताऽल्पायुर्देशोत्सादः सरोगता ॥ ४४ ॥ अधर्म्माभिनिवेशित्वं तमोवृत्तं कलौ स्मृतम् ॥ भ्रूणहत्या प्रजानां च तथा ह्येवं प्रवर्त्तते ॥ ४५ ॥ तस्मादायुर्बलं रूपं प्रहीयन्ते कलौ युगे ॥ दुःखेनाभिप्लुतानां च परमायुः शतं नृणाम् ॥४६॥ भूत्वा च न भवन्तीह वेदाः कलियुगेऽखिलाः ॥ उत्सीदन्ते तथा यज्ञाः केवलं धर्म्महेतवः ॥ ४७ ॥ एषा कलियुगावस्था सन्ध्यांशो तु निबोधत ॥ युगे युगे तु हीयन्ते त्रींस्त्रीन्पादांश्च सिद्धयः ॥ ४८ ॥ युगस्वभावाः सन्ध्यासु अवतिष्ठन्ति पादतः ॥ सन्ध्यास्वभावाः स्वांशेषु पादेनैवावतस्थिरे ॥ ४९ ॥ एवं

सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके ॥ तेषामधर्म्मिणां शास्ता भृगूणां च कुले स्थितः ॥ ५०॥ गोत्रेण वै चन्द्रमसो नाम्ना प्रमतिरुच्यते॥ कलिसन्ध्यांशभागेषु मनोः स्वायम्भुवेऽन्तरे ॥ ५१ ॥ समात्रिंशत्तु सम्पूर्णाः पर्य्यटन्वै वसुन्धराम् ॥ अन्नकर्म्मा स वै सेनां हस्त्यश्वरथसङ्कुलाम् ॥ ५२ ॥ प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः ॥ स तदा तैः परिवृतो म्लेच्छान्सर्वान्निजाघ्निवान् ॥ ५३ ॥ स हत्वा सर्वशश्चैव राजानः शूद्रयोनयः ॥ पाषण्डान् स तदा सर्वान्निःशेषानकरोत्प्रभुः ॥५४ ॥ अधार्म्मिकाश्च ये केचित्तान्सर्वान्हन्ति सर्वशः ॥ औदीच्यान्मध्यदेशांश्च पार्वतीयांस्तथैव च ॥ ५५ ॥ प्राच्यान्प्रतीच्यांश्च तथा विन्ध्यपृष्ठापरान्तिकान् ॥ तथैव दाक्षिणात्यांश्च द्रविडान्सिंहलैः सह ॥ ५६॥ गान्धारान्पारदांश्चैव पह्लवान्यवनाञ्छकान् ॥ तुषारान्बर्ब्बराञ्छ्वेतान्हलिकान्दरदान्खसान् ॥ ५७ ॥ लम्पकानान्ध्रकांश्चापि चोरजातींस्तथैव च ॥ प्रवृत्तचक्रो बलवाञ्छूद्राणामन्तकृद्बभौ ॥ ५८ ॥ विद्राव्य सर्वभूतानि चचार वसुधामिमाम् ॥ मानवस्य तु वंशे तु नृदेवस्येह जज्ञिवान् ॥ ५९ ॥ पूर्वजन्मनि विष्णुश्च प्रमतिर्नाम वीर्य्यवान् ॥ स्वतः स वै चन्द्रमसः पूर्वे कलियुगे प्रभुः ॥ ६० ॥ द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्तो विंशतिं समाः ॥ निजघ्ने सर्वभूतानि मानुषाण्येव सर्वशः ॥ ६१ ॥ कृत्वा बीजावशिष्टां तां पृथ्वीं क्रूरेण कर्म्मणा ॥ परस्परनिमित्तेन कालेनाकस्मिकेन च ॥ ६२ ॥ संस्थिता सहसा या तु सेना प्रमतिना सह ॥ गङ्गायमुनयोर्मध्ये सिद्धिं प्राप्ता समाधिना ॥ ६३ ॥ ततस्तेषु प्रनष्टेषु सन्ध्यांशे क्रूरकर्म्मसु ॥ उत्साद्य पार्थिवान् सर्वांस्तेष्वतीतेषु वै तदा ॥ ६४ ॥ ततः सन्ध्यांशके काले सम्प्राप्ते च युगान्तके ॥ स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित्क्वचित् ॥६५॥ स्वाप्रदानास्तदा ते वै लोभाविष्टास्तु वृन्दशः ॥ उपहिंसन्ति चान्योन्यं प्रलुम्पन्ति परस्परम् ॥ ६६ ॥ अराजके युगांशे तु संक्षये समुपस्थिते ॥ प्रजास्ता वै तदा सर्वाः परस्परभयार्दिताः ॥६७॥ व्याकुलास्ताः परावृत्तास्त्यज्य देवगृहाणि तु ॥ स्वान्स्वान्प्राणानवेक्षन्तो निष्कारुण्यात्सुदुःखिताः ॥ ६८ ॥ नष्टे श्रौतस्मृते धर्म्मे कामक्रोधवशानुगाः ॥ निर्म्मर्य्यादा निरानन्दा निःस्नेहा निरपत्रपाः ॥६९॥ नष्टे धर्म्मे प्रतिहता ह्रस्वकाः पंचविंशकाः॥ हित्वा दारांश्च पुत्रांश्च विषादव्याकुलप्रजाः ॥ ७०॥ अनावृष्टिहतास्ते वै वार्त्तामुत्सृज्य दुःखिताः ॥आश्रयन्ति स्म प्रत्यन्तान्हित्वा जनपदान्स्वकान् ॥७१॥ सरितः सागरानूपान् सेवन्ते पर्वतानपि ॥ चीर

कृष्णाजिनधरा निष्क्रिया निष्परिग्रहाः ॥७२॥ वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः ॥ एवं कष्टमनुप्राप्ता ह्यल्पशेषाः प्रजास्ततः ॥ ७३ ॥ जन्तवश्च क्षुधाविष्टा दुःखान्निर्वेदमागमन् ॥ संश्रयन्ति च देशांस्तांश्चक्रवत्परिवर्त्तनाः॥७४॥ ततः प्रजास्तु ताः सर्वा मांसाहारा भवन्ति हि ॥ मृगान्वराहान्वृषभान् ये चान्ये वनचारिणः ॥७५॥ भक्ष्यांश्चैवाप्यभक्ष्यांश्च सर्वांस्तान्भक्षयन्ति ताः ॥ समुद्रं संश्रिता यास्तु नदीश्चैव प्रजास्तु ताः ॥ ७६ ॥ तेऽपि मत्स्यान् हरन्तीह अहारार्थं च सर्वशः ॥ अभक्ष्याहारदोषेण एकवर्णगताः प्रजाः॥७७॥ यथा कृतयुगे पूर्वमेकवर्णमभूत् किल ॥ तथा कलियुगस्यान्ते शूद्रीभूताः प्रजास्तथा ॥ ७८ ॥ एवं वर्षशतं पूर्णं दिव्यं तेषां न्यवर्त्तत ॥ षट्त्रिंशच्च सहस्राणि मानुषाणि तु तानि वै ॥ ७९ ॥ अथ दीर्घेण कालेन पक्षिणः पशवस्तथा ॥ मत्स्याश्चैव हताः सर्वैः क्षुधाविष्टैश्च सर्वशः ॥ ८० ॥ निःशेषेष्वथ सर्वेषु मत्स्यपक्षिपशुष्वथ ॥ सन्ध्यांशे प्रतिपन्ने तु निःशेषास्तु तदा कृताः ॥ ८१ ॥ ततः प्रजास्तु सम्भूय कन्दमूलमथोऽखनन् ॥ फलमूलाशनाः सर्वे अनिकेतास्तथैव च ॥८२ ॥ वल्कलान्यथ वासांसि अधःशय्याश्च सर्वशः ॥ परिग्रहो न तेष्वस्ति धनशुद्धिमवाप्नुयुः ॥८३॥ एवं क्षयं गमिष्यन्ति ह्यल्पाशिष्टाः प्रजास्तदा ॥ तासामल्पावशिष्टानामाहाराद्वृद्धिरिष्यते ॥ ८४ ॥ एवं वर्षशतं दिव्यं सन्ध्यांशस्तस्य वर्त्तते ॥ ततो वर्षशतस्यान्ते अल्पाशिष्टाः स्त्रियः सुताः ॥ ८५ ॥ मिथुनानि तु ताः सर्वा ह्यन्योन्यं सम्प्रजज्ञिरे ॥ ततस्तास्तु म्रियन्ते वै पूर्वोत्पन्नाः प्रजास्तु याः ॥ ८६ ॥ जातमात्रेष्वपत्येषु ततः कृतमवर्त्तत ॥ यथा स्वर्गे शरीराणि नरके चैव देहिनाम् ॥ ८७ ॥ उपभोगसमर्थानि एवं कृतयुगादिषु ॥ एवं कृतस्य सन्तानः कलेश्चैव क्षयस्तथा ॥ ८८ ॥ विचारणात्तु निर्वेदः साम्यावस्थात्मना तथा ॥ ततश्चैवात्मसम्बोधः सम्बोधाद्धर्मशीलता ॥ ८९ ॥ कलिशिष्टेषु तेष्वेवं जायन्ते पूर्ववत्प्रजाः ॥ भाविनोऽर्थस्य च बलात्ततः कृतमवर्त्तत ॥९०॥ अतीतानागतानि स्युर्यानि मन्वन्तरेष्विह॥ एते युगस्वभावास्तु मयोक्तास्तु समासतः॥९१॥ विस्तरेणानुपूर्व्याच्च नमस्कृत्य स्वयम्भुवे ॥ प्रवृत्ते तु ततस्तस्मिन्पुनः कृतयुगे तु वै ॥ ९२ ॥ उत्पन्नाः कलिशिष्टेषु प्रजाः कार्तयुगास्तथा ॥ तिष्ठन्ति चेह ये सिद्धा अदृष्टा विहरन्ति च ॥ ९३ ॥ सह सप्तर्षिभिर्ये तु

१ सहस्रान्त इत्यपि पाठः ।

तत्र ये च व्यवस्थिताः ॥ ब्रह्मक्षत्रविशः शूद्रा बीजार्थे य इह स्मृताः ॥ ९४ ॥ तेषां सप्तर्षयो धर्म्मं कथयन्तीह तेषु च ॥ ९५ ॥ वर्णाश्रमाचारयुतं श्रौतस्मार्त्तविधानतः ॥ एवं तेषु क्रियावत्सु प्रवर्त्तन्तीह वै कृते ॥ ९६ ॥ श्रौतस्मार्त्तस्थितानां तु धर्मे सप्तर्षिदर्शिते ॥ ते तु धर्मव्यवस्थार्थं तिष्ठन्तीह कृते युगे ॥९७॥ मन्वन्तराधिकारेषु तिष्ठन्ति ऋषयस्तु ते ॥ यथा दावप्रदग्धेषु तृणेष्वेवापनक्षितौ ॥ ९८॥ वनानां प्रथमं दृष्टा तेषां मूलेषु सम्भवः ॥ एवं युगाद्युगानां वै सन्तानस्तु परस्परम्॥९९॥ प्रवर्त्तते ह्यविच्छेदाद्यावन्मन्वन्तरक्षयः॥सुखमायुर्बलं रूपं धर्मार्थौ काम एव च ॥ १०० ॥ युगेष्वेतानि हीयन्ते त्रयः पादाः क्रमेण तु ॥ इत्येष प्रतिसन्धिर्वः कीर्त्तितस्तु मया द्विजाः ॥ १०१ ॥ चतुर्युगानां सर्वेषामेतदेव प्रसाधनम् ॥ एषां चतुर्युगानां तु गणिता ह्येकसप्ततिः ॥१०२ ॥ क्रमेण परिवृत्तास्ता मनोरन्तरमुच्यते ॥ युगाख्यासु तु सर्वासु भवतीह यदा च यत् ॥ १०३ ॥ तदेव च तदन्यासु पुनरतद्वै यथाक्रमम् ॥ सर्गेसर्गे यथा भेदा ह्युत्पद्यन्ते तथैव च ॥ १०४ ॥ चतुर्दशसु तावन्तो ज्ञेया मन्वन्तरेष्विह ॥ आसुरी यातुधानी च पैशाची यक्षराक्षसी ॥ १०५॥युगे युगे तदा काले प्रजा जायन्ति ताः शृणु॥यथाकल्पं युगैः सार्द्धं भवन्ते तुल्यलक्षणाः ॥ इत्येत ल्लक्षणं प्रोक्तं युगानां वै यथाक्रमम् ॥ १०६ ॥ मन्वन्तराणां परिवर्त्तनानि चिरप्रवृत्तानि युगस्वभावात् ॥ क्षणं न सन्तिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ॥ १०७ ॥ एते युगस्वभावा वः परिक्रान्ता यथाक्रमम् ॥ मन्वन्तराणि यान्यस्मिन्कल्पे वक्ष्यामि तानि च ॥१०८ ॥ इति श्रीमात्स्ये महापुराणे मन्वन्तरानुकीर्त्तनयुगवर्त्तनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥छ॥ सूत उवाच ॥ मन्वन्तराणि यानि स्युः कल्पेकल्पे चतुर्दश ॥ व्यतीतानागतानि स्युर्यानि मन्वन्तरेष्विह ॥ १ ॥ विस्तरेणानुपूर्व्याच्च स्थितिं वक्ष्ये युगे युगे ॥ तस्मिन्युगे च सम्भूतिर्यासां यावच्च जीवितम् ॥ २ ॥ युगमात्रं तु जीवन्ति न्यूनं तत्स्याद्द्वयेन च ॥ चतुर्दशसु तावंतो ज्ञेया मन्वंतरेष्विह ॥ ३॥ मनुष्याणां पशूनां च पक्षिणां स्थावरैः सह ॥ तेषामायुरुपक्रान्तं युगधर्मेषु सर्वशः ॥४ ॥ तथैवायुः परिक्रान्तं युगधर्मेषु सर्वशः ॥ अस्थितिं च कलौ दृष्ट्वा भूतानामायुषश्च वै ॥५॥ परमायुः शतं त्वेतन्मानुषाणां कलौ स्मृतम् ॥ देवासुरमनुष्याश्च यक्षगन्धर्वराक्षसाः ॥ ६ ॥ परिणाहोच्छ्रये तुल्या जायन्ते ह कृते युगे ॥ षण्णवत्यङ्गुलोत्सेधो ह्यष्टानां देवयोनिनाम् ॥ ७॥

नवाङ्गुलप्रमाणेन निष्पन्नेन तथाष्टकम् ॥ एतत्स्वाभाविकं तेषां प्रमाणमधिकुर्वताम् ॥ ८ ॥ मनुष्या वर्त्तमानास्तु युगसन्ध्यांशकेष्विह ॥ देवासुरप्रमाणं तु सप्तसप्ताङ्गुलं क्रमात् ॥ ९ ॥ चतुराशीतिकश्चैव कलिजैरङ्गुलैः स्मृतम् ॥ आपादतलमस्तको नवतालो भवेत्तु यः ॥ १० ॥ संहत्या जानुबाहुश्च दैवतैरभिपूज्यते ॥ गवां च हस्तिनां चैव महिषस्थावरात्मनाम् ॥ ११ ॥ क्रमेणैतेन विज्ञेये ह्रासवृद्धी युगे युगे ॥ षट्सप्तत्यङ्गुलोत्सेधः पशुराककुदो भवेत् ॥ १२ ॥ अङ्गुलानामष्टशतमुत्सेधो हस्तिनां स्मृतः ॥ अङ्गुलानां सहस्रं तु द्विचत्वारिंशदङ्गुलम् ॥ १३ ॥ शतार्द्धमङ्गुलानां तु ह्युत्सेधः शाखिनां परः ॥ मानुषस्य शरीरस्य सन्निवेशस्तु यादृशः ॥ १४ ॥ तल्लक्षणं तु देवानां दृश्यतेऽन्वयदर्शनात् ॥ बुद्ध्यातिशयसंयुक्तो देवानां काय उच्यते ॥ १५ ॥ तथा नातिशयश्चैव मानुषः काय उच्यते ॥ इत्येव हि परिक्रान्ताः भावा ये दिव्यमानुषाः ॥ १६ ॥ पशूनां पक्षिणां चैव स्थावराणां च सर्वशः ॥ गावोऽजाश्वाश्च विज्ञेया हस्तिनः पक्षिणो मृगाः ॥ १७ ॥ उपयुक्ताः क्रियास्वेते याज्ञियास्त्विह सर्वशः ॥ यथाक्रमोपभोगाश्च देवानां पशुमूर्त्तयः ॥ १८ ॥ तेषां रूपानुरूपैश्च प्रमाणैः स्थिरजङ्गमाः ॥ मनोज्ञैस्तत्र तैर्भोगैः सुखिनो ह्युपपेदिरे ॥ १९ ॥ अथ संतः प्रवक्ष्यामि साधूनथ ततश्च वै ॥ ब्राह्मणाः श्रुतिशब्दाश्च देवानां पशुमूर्तयः ॥ संयुज्य ब्रह्मणा ह्यन्तस्तेन सन्तः प्रचक्षते ॥ २० ॥ सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ॥ ब्रह्मक्षत्रविशो युक्ताः श्रौतस्मार्त्तेन कर्मणा ॥ २१ ॥ वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतो ॥ श्रौतस्मार्त्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ॥ २२ ॥ दिव्यानां साधनात्साधुर्ब्रह्मचारी गुरोर्हितः ॥ कारणात्साधनाच्चैव गृहस्थः साधुरुच्यते ॥ २३ ॥ तपसश्च तथारण्ये साधुर्वैखानसः स्मृतः ॥ यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥ २४ ॥ धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः ॥ कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत्प्रभुः ॥ २५ ॥ अथ देवाश्च पीतर ऋषयश्चैव मानुषाः ॥ अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्त्तिना ॥ २६ ॥ धर्मेति धारणे धातुर्महत्त्वे चैवमुच्यते ॥ आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ॥ २७ ॥ तत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते ॥ अधर्मश्चानिष्टफल आचार्यैर्नोपदिश्यते ॥ २८ ॥ वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः ॥ सम्यग्विनीता मृदवस्तानाचार्यान् प्रचक्षते ॥ २९ ॥ धर्मज्ञैर्विहितो धर्मः श्रौतस्मार्त्तो द्विजातिभिः ॥ दाराग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्ष

णम् ॥ ३० ॥ स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ॥ पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥ ३१ ॥ ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः ॥ मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ॥ ३२ ॥ तस्मात्स्मार्त्तः स्मृतो धर्मो वर्णाश्रमविभागशः ॥ एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते ॥ ३३ ॥ शिषेर्धातोश्च निष्ठान्ताच्छिष्टशब्दं प्रचक्षते ॥ मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥ ३४ ॥ मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः ॥ तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान् संप्रचक्षते ॥ ३५ ॥ तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगेयुगे ॥ त्रयी वार्त्ता दण्डनीतिः प्रजावर्णाश्रमेप्सया ॥ ३६ ॥ शिष्टैराचर्यते यस्मात्पुनश्चैव मनुक्षये ॥ पूर्वैः पूर्वैर्मतत्वाच्च शिष्टाचारः स शाश्वतः ॥ ३७ ॥ दानं सत्यं तपो लोको विद्येज्या पूजनं दमः ॥ अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥ ३८ ॥ शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह ॥ मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः॥३९॥ विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त उच्यते ॥ इज्यावेदात्मकः श्रौतः स्मार्त्तो वर्णाश्रमात्मकः ॥ ४० ॥ प्रत्यङ्गानि प्रवक्ष्यामि धर्म्मस्येह तु लक्षणम् ॥ ४१ ॥ दृष्टानुभूतमर्थं च यः पृष्टो न विगूहते ॥ यथाभूतप्रवादस्तु इत्येतत्सत्यलक्षणम् ॥ ४२ ॥ ब्रह्मचर्यं तपो मौनं निराहारत्वमेव च ॥ इत्येतत्तपसो रूपं सुघोरं तु दुरासदम् ॥४३॥ पशूनां द्रव्यहविषामृक्सामयजुषां तथा ॥ ऋत्विजां दक्षिणायां च संयोगो यज्ञ उच्यते॥४४॥ आत्मवत्सर्वभूतेषु यो हिताय शुभाय च ॥ वर्त्तते सततं हृष्टः क्रिया श्रेष्ठा दया स्मृता ॥ ४५ ॥ आक्रुष्टोऽभिहतो यस्तु नाक्रोशेत्प्रहरेदपि ॥ अदुष्टो वाङ्मनःकायैस्तितिक्षुः सा क्षमा स्मृता ॥ ४६ ॥ स्वामिना रक्ष्यमाणानामुत्सृष्टानां च सम्भ्रमे ॥ परस्वानामनादानमलोभ इति संज्ञितः ॥ ४७ ॥ मैथुनस्यासमाचारो जल्पनाच्चिन्तनात्तथा ॥ निवृत्तिर्ब्रह्मचर्यं च तदेतच्छमलक्षणम् ॥ ४८ ॥ आत्मार्थे वा परार्थे वा इन्द्रियाणीह यस्य वै ॥ विषये न प्रवर्त्तन्ते दमस्यैतत्तु लक्षणम् ॥ ४९ ॥ पञ्चात्मके यो विषये कारणे चाष्टलक्षणे ॥ न क्रुद्ध्येत प्रतिहतः स जितात्मा भविष्यति॥५०॥ यद्यदिष्टतमं द्रव्यं न्यायेनैवागतं च यत् ॥ तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥ ५१ ॥ श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ॥

१ धर्मलक्षणमित्यपिपाठः ।

शिष्टाचारप्रवृद्धश्च धर्मोऽयं साधुसंमतः ॥ ५२ ॥ अप्रद्वेष्यो ह्यनिष्टेषु इष्टं वै नाभिनंदति ॥ प्रीतितापविषादानां विनिवृत्तिर्विरक्तता ॥ ५३ ॥ संन्यासः कर्मणां न्यासः कृतानामकृतैः सह ॥ कुशलाकुशलाभ्यां तु प्रहाणं न्यास उच्यते ॥ ५४ ॥ अव्यक्तादिविशेषान्ताविकारेऽस्मिन्निव र्त्तते ॥ चेतनाचेतनं ज्ञात्वा ज्ञाने ज्ञानी स उच्यते ॥ ५५ ॥ प्रत्यङ्गानि तु धर्मस्य चेत्येतल्लक्षणं स्मृतम् ॥ ऋषिभिर्धर्मतत्त्वज्ञैः पूर्वैः स्वायंभुवेऽन्तरे ॥ ५६ ॥ अत्र वो वर्णयिष्यामि विधिं मन्वन्तरस्य तु ॥ तथैव चातुर्होत्रस्य चातुर्वर्ण्यस्य चैव हि ॥ ५७ ॥ प्रतिमन्वंतरं चैव श्रुतिरन्या विधीयते ॥ ऋचो यजूंषि सामानि यथावत्प्रतिदैवतम् ॥ ५८ ॥ विधिस्तोत्रं तथा हौत्रं पूर्ववत् संप्रवर्तते ॥ द्रव्यस्तोत्रं गुणस्तोत्रं कर्मस्तोत्रं तथैव च ॥ ५९ ॥ तथैवाभिजनस्तोत्रं स्तोत्रमेवं चतुर्विधम् ॥ मन्वन्तरेषु सर्वेषु यथा वेदाद्भवंति हि ॥ ६० ॥ प्रवर्त्तयन्ति तेषां वै ब्रह्मस्तोत्रं पुनः पुनः ॥ एवं मंत्रगुणानां तु समुत्पत्तिश्चतुर्विधा ॥ ६१ ॥ अथर्वऋग्यजुःसाम्नां वेदेष्विह पृथक् पृथक् ॥ ऋषीणां तप्यतां तेषां तपः परमदुश्चरम् ॥ ६२ ॥ मंत्राः प्रादुर्भवंत्यादौ पूर्वमन्वंतरस्य ह ॥ असन्तोषाद्भयाद्दुःखान्मोहाच्छोकाच्च पञ्चधा ॥ ६३ ॥ ऋषीणां तारका येन लक्षणेन यदृच्छया ॥ ऋषीणां यादृशत्वं हि तद्वक्ष्यामीह लक्षणम् ॥ ६४ ॥ अतीतानागतानां च पञ्चधा ह्यार्षकं स्मृतम् ॥ तथा ऋषीणां वक्ष्यामि आर्षस्येह समुद्भवम् ॥ ६५ ॥ गुणसाम्येन वर्त्तन्ते सर्वसम्प्रलये तदा ॥ अविभागेन वेदानामनिर्देश्यतमोमये ॥ ६६ ॥ अबुद्धिपूर्वकं तद्वै चेतनार्थं प्रवर्त्तते ॥ तेनार्षं बुद्धिपूर्वं तु चेतनेनाऽप्यधिष्ठितम् ॥ ६७ ॥ प्रवर्त्तेते यथा ते तु यथा मत्स्योदकावुभौ ॥ चेतनाधिकृतं सर्वं प्रावर्त्तत गुणात्मकम् ॥ कार्यकारणभावेन तथा तस्य प्रवर्त्तते ॥ ६८ ॥ विषयो विषयित्वं च तदा ह्यर्थपदात्मकौ ॥ कालेन प्रापणीयेन भेदाश्च कारणात्मकाः ॥ ६९॥ सांसिद्धिकास्तदा वृत्ताः क्रमेण महदादयः ॥ महतोऽसावहङ्कारस्तस्माद्भूतेन्द्रियाणि च ॥ ७० ॥ भूतभेदाश्च भूतेभ्यो जज्ञिरे तु परस्परम् ॥ संसिद्धिकारणं कार्यं सद्य एव विवर्त्तते ॥ ७१ ॥ यथोल्मुकात्तु विटपा एककालाद्भवन्ति हि ॥ तथा प्रवृत्ताः क्षेत्रज्ञाः कालेनैकेन कारणात् ॥ ७२ ॥ यथान्धकारे खद्योतः

---

१ भेदाद्दिव्यापि पाठः ।

सहसा सम्प्रदृश्यते ॥ तथा निवृत्तो ह्यव्यक्तः खद्योत इव स ज्वलन् ॥ ७३ ॥ स महात्मा शरीरस्थस्तत्रैवेह प्रवर्तते ॥ महतस्तमसः पारे वैलक्षण्याद्विभाव्यते ॥ ७४ ॥ तत्रैव संस्थितो विद्वांस्तपसान्त इति श्रुतम् ॥ बुद्धिर्विवर्द्धतस्तस्य प्रादुर्भूता चतुर्विधा ॥ ७५ ॥ ज्ञानं वैराग्य मैश्वर्य्यं धर्म्मश्चेति चतुष्टयम् ॥ सांसिद्धिकान्यथैतानि अप्रतीतानि तस्य वै ॥ ७६ ॥ महात्मनः शरीरस्य चैतन्यात् सिद्धिरुच्यते ॥ पुरि शेते यतः पूर्वं क्षेत्रज्ञानं तथापि च ॥ ७७ ॥ पुरे शयनात्पुरुषः क्षेत्रज्ञानात्क्षेत्रज्ञ उच्यते ॥ यस्माद्धर्म्मात्प्रसूते हि तस्माद्वै धार्मिकस्तु सः ॥ ७८ ॥ सांसिद्धिके शरीरे च बुद्ध्याव्यक्तस्तु चेतनः ॥ एवं विवृत्तः क्षेत्रज्ञः क्षेत्रं ह्यनभिसन्धितः ॥ ७९ ॥ निवृत्तिसमकाले तु पुराणं तदचेतनम् ॥ क्षेत्रज्ञेन परिज्ञातं भोग्योऽयं विषयो मम ॥ ८० ॥ ऋषिर्हिंसागतौ धातुर्विद्या सत्यं तपः श्रुतम् ॥ एष सन्निचयो यस्माद्ब्रह्मणस्तु ततस्त्वृषिः ॥ ८१ ॥ निवृत्तिसमकालाच्च बुद्ध्याव्यक्त ऋषिस्त्वयम् ॥ ऋषते परमं यस्मात्परमर्षिस्ततः स्मृतः ॥८२ ॥ गत्यर्थादृषते र्धातोर्नामनिर्वृतिकारणम् ॥ यस्मादेष स्वयम्भूतस्तस्माच्च ऋषिता मता ॥८३॥ सेश्वराः स्वयमुद्भूता ब्रह्मणो मानसाः सुताः ॥ निवर्त्तमानै स्तैर्बुद्ध्या महान् परिगतः परः॥८४॥ यस्मादृशपरत्वेन सह तस्मान्महर्षयः॥ ईश्वराणां सुतास्तेषां मानसाश्चौरसाश्च वै॥८५॥ ऋषिस्तस्मात् परत्वेन भूतादिर्ऋषयस्ततः ॥ ऋषिपुत्रा ऋषीकास्तु मैथुनाद्गर्भसम्भवाः ॥ ८६ ॥ परत्वेन ऋषन्ते वै भूतादीनृषिकास्ततः ॥ ऋषिकाणां सुता ये तु विज्ञेया ऋषिपुत्रकाः॥८७॥ श्रुत्वा ऋतं परत्वेन श्रुतास्तस्माच्छ्रुतर्षयः ॥ अव्यक्तात्मा महात्मा वाऽहंकारात्मा तथैव च ॥८८ ॥ भूतात्मा चेन्द्रियात्मा च तेषां तज्ज्ञानमुच्यते ॥ इत्येवमृषिजातिस्तु पञ्चधा नाम विश्रुता ॥ ८९ ॥ भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः ॥ मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चापि ते दश ॥ ९० ॥ ब्रह्मणो मानसा ह्येते उत्पन्नाः स्वयमीश्वराः ॥ परत्वेनर्षयो यस्मान्मतास्तस्मान्महर्षयः ॥ ९१ ॥ ईश्वराणां सुतास्त्वेषामृषयस्तान्निबोधत ॥ काव्यो बृहस्पतिश्चैव कश्यपश्च्यवनस्तथा ॥९२॥ उतथ्यो वामदेवश्च अगस्त्यः कौशिकस्तथा ॥ कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्द्धनः ॥ ९३ ॥ इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः ॥ तेषां पुत्रानृषीकांस्तु गर्भोत्पन्नान्निबोधत ॥ ९४ ॥ वत्सरो नग्नहूश्चैव भरद्वाजश्च वीर्य्यवान् ॥ ऋषिर्दीर्घतमाश्चैव बृहद्वक्षाः शरद्वतः ॥ ९५ ॥ वाजिश्रवाः सुचि

न्तश्च शावश्च सपराशरः ॥ शृङ्गी च शङ्खपाच्चैव राजा वैश्रवणस्तथा ॥ ९६ ॥ इत्येते ऋषिकाः सर्वे सत्येन ऋषितां गताः ॥ ईश्वरा ऋषय श्चैव ऋषीका ये च विश्रुताः ॥ ९७ ॥ एवं मन्त्रकृतः सर्वे कृत्स्नशश्च निबोधत ॥ भृगुः काश्यपः प्रचेता दधीचो ह्यात्मवानपि ॥ ९८ ॥ ऊर्वोऽथ जमदग्निश्च वेदः सारस्वतस्तथा ॥ आर्ष्टिषेणश्च्यवनश्च वीतहव्यः सवेधसः ॥ ९९ ॥ वैन्यः पृथुर्दिवोदासो ब्रह्मवान्गृत्सशौनकौ ॥ एकोनविंशतिर्ह्येते भृगवो मन्त्रकृत्तमाः ॥ १०० ॥ अङ्गिराश्चैव त्रितश्च भरद्वाजोऽथ लक्ष्मणः ॥ कृतवाचस्तथा गर्गः स्मृतिसंकृतिरेव च ॥ १०१ ॥ गुरुवीतश्च मान्धाता अम्बरीषस्तथैव च ॥ युवनाश्वः पुरुकुत्सः स्वश्रवस्तु सदयस्यवान् ॥ १०२ ॥ अजमीढोऽस्वहार्यश्च ह्युत्कलः कविरेव च ॥ पृषदश्वो विरूपश्च काव्यश्चैवाथ मुद्गलः ॥ १०३ ॥ उतथ्यश्च शरद्वांश्च तथा वाजिश्रवा अपि ॥ अपस्योषः सुचित्तिश्च वामदेवस्तथैव च ॥ १०४ ॥ ऋषिजो बृहच्छुक्रश्च ऋषिर्दीर्घतमा अपि ॥ कक्षीवांश्च त्रयस्त्रिंशत्स्मृता ह्यङ्गिरसां वराः ॥ १०५ ॥ एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत ॥ कश्यपः सहवत्सारो नैध्रुवो नित्य एव च ॥ १०६ ॥ असितो देवलश्चैव षडेते ब्रह्मवादिनः ॥ अत्रिरर्द्धस्वनश्चैव शावास्योऽथ गविष्ठिरः ॥ १०७ ॥ कर्णकश्च ऋषिः सिद्धस्तथा पूर्वातिथिश्च यः ॥ १०८ ॥ इत्येते त्वत्रयः प्रोक्ता मन्त्रकृत् षण्महर्षयः ॥ वसिष्ठश्चैव शक्तिश्च तृतीयश्च पराशरः ॥ १०९ ॥ ततस्तु इन्द्रप्रतिमः पञ्चमस्तु भरद्वसुः ॥ षष्ठस्तु मित्रावरुणः सप्तमः कुण्डिनस्तथा ॥ ११० ॥ इत्येते सप्त विज्ञेया वासिष्ठा ब्रह्मवादिनः ॥ विश्वामित्रश्च गाधेयो देवरातस्तथा बलः ॥ १११ ॥ तथा विद्वान्मधुच्छन्दा ऋषिश्चान्योऽघमर्षणः ॥ अष्टको लोहितश्चैव भृतकीलश्च माम्बुधिः ॥ ११२ ॥ देवश्रवा देवरतः पुराणश्च धनञ्जयः ॥ शिशिरश्च महातेजाः शालङ्कायन एव च ॥ ११३ ॥ त्रयोदशैते विज्ञेया ब्रह्मिष्ठाः कौशिका वराः ॥ अगस्त्योऽथ दृढद्युम्नो इन्द्रबाहुस्तथैव च ॥ ११४ ॥ ब्रह्मिष्ठागस्तयो ह्येते त्रयः परमकीर्त्तयः ॥ मनुर्वैवस्वतश्चैव ऐलो राजा पुरूरवाः ॥ ११५ ॥ क्षत्रियाणां वरौ ह्येतौ विज्ञेयौ मन्त्रवादिनौ ॥ भलन्दकश्च वासाश्वः सङ्कीलश्चैव ते त्रयः ॥ ११६ ॥ एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः सदा ॥ इति द्विनवतिः प्रोक्ता मन्त्रा यैश्च बहिष्कृताः ॥ ११७ ॥ ब्राह्मणाः क्षत्रिया वैश्या ऋषिपुत्रान्निबोधत ॥ ऋषीकाणां सुता ह्येते ऋषिपुत्राः श्रुतर्षयः ॥ ११८ ॥ इति श्रीमात्स्ये

महापुराणे मन्वन्तरकल्पवर्णनो नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ छ ॥ ऋषय ऊचुः ॥ कथं मत्स्येन कथितस्तारकस्य वधो महान्॥कस्मिन्काले विनिर्वृत्ता कथेयं सूतनन्दन ॥ १ ॥ त्वन्मुखक्षीरसिन्धूत्था कथेयममृतात्मिका॥कर्णाभ्यां पिबतां तृप्तिरस्माकं न प्रजायते॥इदं मुने समाख्याहि महाबुद्धे मनोगतम्॥२॥ सूत उवाच॥पृष्टस्तु मनुना देवो मत्स्यरूपी जनार्दनः॥ कथं शरवणे जातो देवः षड्दनो विभो ॥ ३ ॥ एतत्तु वचनं श्रुत्वा पार्थिवस्यामितौजसः ॥ उवाच भगवान्प्रीतो ब्रह्मसूनुर्महामतिम् ॥ ४ ॥ मत्स्य उवाच ॥ वज्राङ्गो नाम दैत्योऽभूत्तस्य पुत्रस्तु तारकः ॥ सुरानुद्वासयामास पुरेभ्यः स महाबलः ॥ ५ ॥ ततस्ते ब्रह्मणोऽभ्याशं जग्मुर्भयनिपीडिताः ॥ भीतांश्च त्रिदशान्दृष्ट्वा ब्रह्मा तेषामुवाच ह ॥ ६ ॥ सन्त्यजध्वं भयं देवाः शङ्करस्यात्मजः शिशुः ॥ तुहिनाचलदौहित्रस्तं हनिष्यति दानवम् ॥ ७ ॥ ततः काले तु कस्मिंश्चिद्दृष्ट्वा वै शैलजां शिवः ॥ स्वरेतो वह्निवदने व्यसृजत्कारणान्तरे ॥ ८ ॥ तत्प्राप्तं वह्निवदने रेतो देवानतर्पयत् ॥ विदार्य्य जठराण्येषामजीर्णं निर्गतं मुने ॥ ९ ॥ पतितं तत्सरिद्वरां ततस्तु शरकानने ॥ तस्मात्तु स समुद्भूतो गुहो दिनकरप्रभः ॥ १० ॥ स सप्तदिवसो बालो निजघ्ने तारकासुरम् ॥ एवं श्रुत्वा ततो वाक्यं तमूचुर्ऋषिसत्तमाः ॥ ११ ॥ ऋषय ऊचुः ॥ अत्याश्चर्य्यवती रम्या कथेयं पापनाशिनी ॥ विस्तरेण हि नो ब्रूहि याथातथ्येन शृण्वताम् ॥ १२ ॥ वज्राङ्गो नाम दैत्येन्द्रः कस्य वंशोद्भवः पुरा ॥ यस्याभूत्तारकः पुत्रः सुरप्रमथनो बली ॥ १३ ॥ निर्म्मितः को वधे चाभूत्तस्य दैत्येश्वरस्य तु ॥ गुहजन्म तु कार्त्स्न्येन अस्माकं ब्रूहि मानद ॥ १४ ॥ सूत उवाच ॥ मानसो ब्रह्मणः पुत्रो दक्षो नाम प्रजापतिः ॥ षष्टिं सोऽजनयत्कन्या वैरिण्यामेव नः श्रुतम् ॥ १५ ॥ ददौ स दश धर्म्माय कश्यपाय त्रयोदश ॥ सप्तविंशति सोमाय चतस्रोऽरिष्टनेमये ॥ १६॥ द्वे वै बाहुकपुत्राय द्वे वै चाङ्गिरसे तथा ॥ द्वे कृशाश्वाय विदुषे प्रजापतिसुतः प्रभुः ॥ १७ ॥ अदितिर्दितिर्दनुर्विश्वा ह्यरिष्टा सुरसा तथा ॥ सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ॥ १८ ॥ कद्रूर्मुनिश्च लोकस्य मातरो गोषु मातरः ॥ तासां सकाशाल्लोकानां जङ्गमस्थावरात्मनाम् ॥ १९ ॥ जन्म नानाप्रकाराणां ताभ्योऽन्ये देहिनः स्मृताः ॥ देवेन्द्रोपेन्द्रपूषाद्याः सर्वे तेऽदितिजा मताः ॥ २० ॥ दितेः सकाशाल्लोकास्तु हिरण्यकशिपादयः ॥ दानवाश्च दनोः पुत्रा गावश्च सुरभीसुताः ॥ २१ ॥ पक्षिणो

विनतापुत्रा गरुडप्रमुखाः स्मृताः ॥ नागाः कद्रूसुता ज्ञेयाः शेषाश्चान्येऽपि जन्तवः ॥ २२ ॥ त्रैलोक्यनाथं शक्रं तु सर्वामरगणप्रभुम् ॥
हिरण्यकशिपुश्चक्रे नीत्वा राज्यं महाबलः ॥२३॥ ततः केनापि कालेन हिरण्यकशिपादयः॥ निहता विष्णुना संख्ये शेषाश्चेन्द्रेण दानवाः॥२४॥
ततो निहतपुत्राभूद्दितिर्वरमयाचत ॥ भर्त्तारं कश्यपं देवं पुत्रमन्यं महाबलम् ॥ २५ ॥ समरे शक्रहन्तारं स तस्या अददात्प्रभुः ॥ २६ ॥
नियमे वर्त्त हे देवि सहस्रं शुचिमानसा ॥ वर्षाणां लप्स्यसे पुत्रमित्युक्ता सा तथाऽकरोत् ॥ २७ ॥ वर्त्तन्त्या नियमे तस्याः सहस्राक्षः
समाहितः ॥ उपासामाचरत्तस्याः सा चैनमन्वमन्यत ॥ २८ ॥ दशवत्सरशेषस्य सहस्रस्य तदा दितिः ॥ उवाच शक्रं सुप्रीता वरदा तपसि
स्थिता ॥ २९ ॥ दितिरुवाच ॥ पुत्रोत्तीर्णव्रतां प्रायो विद्धि मां पाकशासन ॥ भविष्यति च ते भ्राता तेन सार्द्धमिमां श्रियम् ॥ ३० ॥
भुङ्क्ष्व वत्स यथाकामं त्रैलोक्यं हतकण्टकम् ॥ इत्युक्त्वा निद्रयाविष्टा चरणाक्रान्तमूर्द्धजा ॥ ३१ ॥ स्वयं सुष्वापानियता भाविनोऽर्थस्य
गौरवात् ॥ तत्तु रन्ध्रं समासाद्य जठरं पाकशासनः ॥ ३२ ॥ चकार सप्तधा गर्भं कुलिशेन तु देवराट् ॥ एकैकं तु पुनः खण्डं चकार मघवा
ततः ॥ ३३ ॥ सप्तधा सप्तधा कोपात्प्राबुध्यत ततो दितिः ॥ विबुध्योवाच मा शक्र घातयेथाः प्रजां मम ॥ ३४ ॥ तच्छ्रुत्वा निर्गतः शक्रः
स्थित्वा प्राञ्जलिरग्रतः ॥ उवाच वाक्यं सन्त्रस्तो मातुर्वै वदनेरितम् ॥ ३५ ॥ शक्र उवाच ॥ दिवास्वप्नपरा मातः पादाक्रान्तशिरोरुहा ॥ सप्त
सप्तभिरेवातस्तव गर्भः कृतो मया ॥ ३६ ॥ एकोनपंचाशत्कृता भागा वज्रेण ते सुताः॥ दास्यामि तेषां स्थानानि दिवि देवतपूजिते ॥३७॥
इत्युक्ता सा तदा देवी सैवमस्त्वित्यभाषत ॥ पुनश्च देवी भर्त्तारमुवाचासितलोचना ॥ ३८ ॥ पुत्रं प्रजापते देहि शक्रजेतारमूर्जितम् ॥ यो
नास्त्रशस्त्रैर्वध्यत्वं गच्छेत्रिदिववासिनाम् ॥ ३९ ॥ इत्युक्तः स तथोवाच तां पत्नीमतिदुःखिताम् ॥ दशवर्षसहस्राणि तपः कृत्वा तु लप्स्यसे
॥ ४० ॥ वज्रसारमयैरङ्गैरच्छेद्यैरायसैर्दृढैः ॥ वज्राङ्गो नाम पुत्रस्ते भविता पुत्रवत्सले ॥ ४१ ॥ सा तु लब्धवरा देवी जगाम तपसे वनम् ॥
दशवर्षसहस्राणि सा तपो घोरमाचरत् ॥ ४२ ॥ तपसोऽन्ते भगवती जनयामास दुर्जयम् ॥ पुत्रमप्रतिकर्म्माणमजेयं वज्रदुश्छिदम् ॥ ४३ ॥
स जातस्तत्र एवाभूत्सर्वशस्त्रास्त्रपारगः ॥ उवाच मातरं भक्त्या मातः किं करवाण्यहम् ॥ ४४ ॥ तमुवाच ततो हृष्टा दितिर्दैत्याधिपं च सा ॥

बहवो मे हताः पुत्राः सहस्राक्षेण पुत्रक ॥४५॥ तेषां त्वं प्रतिकर्तुं वै गच्छ शक्रवधाय च ॥ बाढमित्येव तामुक्त्वा जगाम त्रिदिवं बली ॥४६॥ बद्ध्वा ततः सहस्राक्षं पाशेनामोघवर्चसा ॥ मातुरन्तिकमागच्छद्व्याघ्रः क्षुद्रमृगं यथा ॥ ४७ ॥ एतस्मिन्नन्तरे ब्रह्मा कश्यपश्च महातपाः ॥ आगतौ तत्र यत्रास्तां मातापुत्रावभीतकौ ॥ ४८ ॥ दृष्ट्वा तु तमुवाचेदं ब्रह्मा कश्यप एव च ॥ मुंचैनं पुत्र देवेन्द्रं किमनेनैं प्रयोजनम् ॥ ४९ ॥ अपमानो वधः प्रोक्तः पुत्र सम्भावितस्य च ॥ अस्मद्वाक्येन यो मुक्तो विद्धि तं मृतमेव च ॥५०॥ परस्य गौरवान्मुक्तः शत्रूणां भारमावहेत ॥ जीवन्नेव मृतो वत्स दिवसे दिवसे स तु॥५१॥ महतां वशमायाते वैरं नैवास्ति वैरिणि ॥ एतच्छ्रुत्वा तु वज्राङ्गः प्रणतो वाक्यमब्रवीत्॥५२॥न मे कृत्यमनेनास्ति मातुराज्ञा कृता मया॥त्वं सुरासुरनाथो वै मम च प्रपितामहः ॥५३॥करिष्ये त्वद्वचो देव एष मुक्तः शतक्रतुः॥तपसे मे रतिर्देव निर्विघ्नं चैव मे भवेत् ॥५४॥ त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम सः ॥ तस्मिंस्तूष्णीं स्थिते दैत्ये प्रोवाचेदं पितामहः ॥ ५५ ॥ ब्रह्मोवाच ॥ तपस्त्वं क्रूरमापन्नो ह्यस्मच्छासनसंस्थितः ॥ अनया चित्तशुद्ध्या ते पर्याप्तं जन्मनः फलम् ॥ ५६ ॥ इत्युक्त्वा पद्मजः कन्यां ससर्जायतलोचनाम् ॥ तामस्मै प्रददौ देवः पत्न्यर्थं पद्मसम्भवः ॥ ५७ ॥ वराङ्गीति च नामास्याः कृत्वा यातः पितामहः ॥ वज्राङ्गोऽपि तया सार्द्धं जगाम तपसे वनम् ॥ ५८ ॥ ऊर्द्धबाहुः स दैत्येन्द्रोऽचरदब्दसहस्रकम् ॥ कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः ॥ ५९ ॥ तावच्चावाङ्मुखः कालं तावत्पञ्चाग्निमध्यगः ॥ निराहारो घोरतपास्तपोराशिरजायत ॥ ६० ॥ ततः सोऽन्तर्जले चक्रे कालं वर्षसहस्रकम् ॥ जलान्तरं प्रविष्टस्य तस्य पत्नी महाव्रता ॥६१॥ तस्यैव तीरे सरसस्तत्पश्यन्ती मौनमास्थिता ॥ निराहारा तपो घोरं प्रविवेश महाद्युतिः ॥ ६२ ॥ तस्यां तपसि वर्तन्त्यामिन्द्रश्चक्रे विभीषिकाम् ॥ भूत्वा तु मर्कटस्तत्र तदाश्रमपदं महान् ॥ ६३ ॥ चक्रे विलोलं निःशेषं तुम्बीघटकरण्डकम् ॥ ततस्तु मेषरूपेण कम्पं तस्याकरोन्महान् ॥ ६४ ॥ ततो भुजङ्गरूपेण बध्वा च चरणद्वयम् ॥ अपाकर्षत्ततो दूरं भ्रमंस्तस्या महीमिमाम् ॥६५॥ तपोबलाढ्या सा तस्य न वध्यत्वं जगाम ह ॥ ततो गोमायुरूपेण तस्यादूषयदाश्रमम्॥६६॥ ततस्तु मेघरूपेण तस्याः क्लेदयदाश्रमम् ॥ भीषिकाभिरनेकाभिस्तां क्लिश्यन् पाकशासनः ॥ ६७ ॥ विरराम यदा नैवं वज्राङ्गमहिषी तदा ॥

शैलस्य दुष्टतां मत्वा शापं दातुं व्यवस्थिता ॥६८॥ स शापाभिमुखीं दृष्ट्वा शैलः पुरुषविग्रहः ॥ उवाच तां वरारोहां वराङ्गीं भीरुचेतनः ॥६९॥ नाहं वराङ्गने दुष्टः सेव्योऽहं सर्वदेहिनाम् ॥ विभ्रमं तु करोत्येष रुषितः पाकशासनः ॥७०॥ एतस्मिन्नन्तरे जातः कालो वर्षसहस्रिकः ॥ तस्मिन् गते तु भगवान्काले कमलसम्भवः ॥ तुष्टः प्रोवाच वज्राङ्गं तमागम्य जलाश्रयम् ॥ ७१ ॥ ब्रह्मोवाच ॥ ददामि सर्वकामांस्ते उत्तिष्ठ दितिनन्दन ॥ एवमुक्तस्तदोत्थाय दैत्येन्द्रस्तपसां निधिः ॥ उवाच प्रांजलिर्वाक्यं सर्वलोकपितामहम् ॥ ७२ ॥ वज्रांग उवाच ॥ आसुरो मास्तु मे भावः सन्तु लोका ममाक्षयाः ॥ तपस्येव रतिर्मेऽस्तु शरीरस्यास्तु वर्त्तनम् ॥७३॥ एवमस्त्विति तं देवो जगाम स्वकमालयम् ॥ वज्रांगोऽपि समाप्ते तु तपसि स्थिरसंयमः ॥ ७४ ॥ आहारमिच्छन् भार्यां स्वां न ददर्शाश्रमे स्वके ॥ क्षुधाविष्टः स शैलस्य गहनं प्रविवेश ह ॥ ७५ ॥ आदातुं फलमूलानि स च तस्मिन् व्यलोकयत् ॥ रुदतीं तां प्रियां दीनां तनुप्रच्छादिताननाम् ॥ तां विलोक्य स दैत्येन्द्रः प्रोवाच परिसान्त्वयन् ॥७६॥ वज्रांग उवाच ॥ केन तेऽपकृतं भीरु यमलोकं यियासुना ॥ कं वा कामं प्रयच्छामि शीघ्रं मे ब्रूहि भामिनि ॥७७॥ इति श्रीमात्स्ये महापुराणे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥१४६॥ वराङ्ग्युवाच ॥ त्रासितास्म्यपविद्धास्मि ताडिता पीडितापि च ॥ रौद्रेण देवराजेन नष्टनाथेव भूरिशः ॥ १ ॥ दुःखपारमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता ॥ पुत्रं मे तारकं देहि दुःखशोकमहार्णवात् ॥ २ ॥ एवमुक्तः स दैत्येन्द्रः कोपव्याकुललोचनः ॥ शक्तोऽपि देवराजस्य प्रतिकर्तुं महासुरः ॥३॥ तपः कर्तुं पुनर्दैत्यो व्यवस्येत महाबलः ॥ ज्ञात्वा तु तस्य संकल्पं ब्रह्मा क्रूरतरं पुनः ॥ ४ ॥ आजगाम तदा तत्र यत्रासौ दितिनन्दनः ॥ उवाच तस्मै भगवान्प्रभुर्मधुरया गिरा ॥ ५ ॥ ब्रह्मोवाच ॥ किमर्थं पुत्र भूयस्त्वं नियमं क्रूरमिच्छसि ॥ आहाराभिमुखो दैत्य तन्नो ब्रूहि महाव्रत ॥ ६ ॥ यावद्वर्षसहस्रेण निराहारस्य यत्फलम् ॥ क्षणेनैकेन तल्लभ्यं त्यक्त्वाहारमुपस्थितम् ॥ ७ ॥ त्यागो ह्यप्राप्तकामानां कामेभ्यो न तथा गुरुः ॥ यथा प्राप्तं परित्यज्य कामं कमललोचन ॥ ८ ॥ श्रुत्वैतद्ब्रह्मणो वाक्यं दैत्यः प्राञ्जलिरब्रवीत् ॥ चिन्तयंस्तपसा युक्तो हृदि ब्रह्ममुखेरितम् ॥ ९ ॥ वज्रांग उवाच ॥ उत्थितेन मया दृष्टा समाधानात्त्वदाज्ञया ॥ महिषी भीषिता दीना रुदती आसिनस्तले ॥ १० ॥ सा मयोक्ता तु तन्वङ्गी दूयमानेन चेतसा ॥ किमेवं वर्त्तसे भीरु वद

त्वं किं चिकीर्षसि ॥ ११ ॥ इत्युक्ता सा मया देव प्रोवाच स्खलिताक्षरम् ॥ वाक्यं वाचस्पते भीता तन्वङ्गी हेतुसंहितम् ॥ १२ ॥ वराङ्ग्युवाच ॥ त्रासितास्म्यपविद्धास्मि कर्षिता पीडितास्मि च ॥ रौद्रेण देवराजेन नष्टनाथेव भूरिशः ॥ १३ ॥ दुःखस्यान्तमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता ॥ पुत्रं मे तारकं देहि ह्यस्माद्दुःखमहार्णवात् ॥ १४ ॥ एवमुक्तस्तु संक्षुब्धस्तस्याः पुत्रार्थमुद्यतः ॥ तपो घोरं करिष्यामि जयाय त्रिदिवौकसाम् ॥ १५ ॥ एतच्छ्रुत्वा वचो देवः पद्मगर्भोद्भवस्तदा ॥ उवाच दैत्यराजानं प्रसन्नश्चतुराननः ॥ १६॥ ब्रह्मोवाच ॥ अलं ते तपसा वत्स मा क्लेशे दुस्तरे विश॥पुत्रस्ते तारको नाम भविष्यति महाबलः ॥१७॥ देवसीमन्तिनीनां तु धम्मिल्लस्य विमोक्षणः ॥ इत्युक्तो दैत्यनाथस्तु प्रणिपत्य पितामहम् ॥ १८ ॥ आगत्यानन्दयामास महिषीं हर्षिताननः ॥ तौ दम्पती कृतार्थौ तु जग्मतुः स्वाश्रमं मुदा ॥ १९ ॥ वज्राङ्गेणाहितं गर्भं वरांगी वरवर्णिनी ॥ पूर्णं वर्षसहस्रं च दधारोदर एव हि ॥ २० ॥ ततो वर्षसहस्रान्ते वराङ्गी सुषुवे सुतम् ॥ जायमाने तु दैत्येन्द्रे तस्मिँल्लोकभयङ्करे ॥ २१ ॥ चचाल सकला पृथ्वी समुद्राश्च चकम्पिरे ॥ चेलुर्महीधराः सर्वे ववुर्वाताश्च भीषणाः ॥ २२ ॥ जेपुर्जप्यं मुनिवरा नेदुर्व्यालमृगा अपि ॥ चन्द्रसूर्यौ जहुः कान्तिं सनीहारा दिशोऽभवन् ॥ २३ ॥ जाते महासुरे तस्मिन् सर्वे चापि महासुराः ॥ आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः ॥ २४ ॥ जगुर्हर्षसमाविष्टा ननृतुश्चासुराङ्गनाः ॥ ततो महोत्सवो जातो दानवानां द्विजोत्तमाः ॥ २५ ॥ विषण्णमनसो देवाः समहेन्द्रास्तदाभवन् ॥ वरांगी स्वसुतं दृष्ट्वा हर्षेणापूरिता तदा ॥ २६ ॥ बहुमेने न देवेन्द्रविजयं तु तदैव सा ॥ जातमात्रस्तु दैत्येन्द्रस्तारकश्चण्डविक्रमः ॥ २७ ॥ अभिषिक्तोऽसुरैः सर्वैः कुजम्भमहिषादिभिः ॥ सर्वासुरमहाराज्ये पृथिवीतुलनक्षमैः ॥ २८ ॥ स तु प्राप्य महाराज्यं तारको मुनिसत्तमाः ॥ उवाच दानवश्रेष्ठान् युक्तियुक्तमिदं वचः ॥ २९ ॥ इति श्रीमात्स्ये महापुराणे तारकासुरोपाख्याने तारकोत्पत्तिर्नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ छ ॥ तारक उवाच ॥ शृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः ॥ श्रेयसे क्रियतां बुद्धिः सर्वैः कृत्यस्य संविधौ ॥ १ ॥ वंशक्षयकरा देवाः सर्व्वेषामेव दानवाः ॥ अस्माकं जातिधर्म्मो वै विरूढं वैरमक्षयम् ॥ २ ॥ वयमद्य गमिष्यामः सुराणां निग्रहाय तु ॥ स्वबाहुबलमाश्रित्य सर्व एवमसंशयः ॥ ३ ॥

किन्तु नातपसा युक्तो मन्येऽहं सुरसङ्गमम् ॥ अहमादौ करिष्यामि तपो घोरं दितेः सुताः ॥ ४ ॥ ततः सुरान्विजेष्यामो भोक्ष्यामोऽथ जगत्त्रयम् ॥ स्थिरोपायो हि पुरुषः स्थिरश्रीरपि जायते ॥ ५ ॥ रक्षितुं नैव शक्नोति चपलश्चपलाः श्रियः ॥ तच्छ्रुत्वा दानवाः सर्वं वाक्यं तस्यासुरस्य तु ॥ ६ ॥ साधु साध्वित्यथोचुस्ते तत्र दैत्याः सविस्मयाः ॥ सोऽगच्छत्पारियात्रस्य गिरेः कन्दरमुत्तमम् ॥ ७ ॥ सर्वर्तुकुसुमाकीर्णं नानौषधिविदीपितम् ॥ नानाधातुरसस्रावचित्रं नानागुहागृहम् ॥ ८ ॥ गहनैः सर्वतो गूढं चित्रकल्पद्रुमाश्रयम् ॥ अनेकाकारबहुलं पृथक्पक्षिकुलाकुलम् ॥ ९ ॥ नानाप्रस्रवणोपेतं नानाविधजलाशयम् ॥ प्राप्य तत्कन्दरं दैत्यश्चचार विपुलं तपः ॥ १० ॥ निराहारः पंचतपाः पत्रभुग्वारिभोजनः ॥ शतं शतं समानां तु तपांस्येतानि सोऽकरोत् ॥ ११ ॥ ततः स्वदेहादुत्कृत्य कर्षं कर्षं दिने दिने ॥ मांसस्याग्नौ जुहावासौ ततो निर्म्मांसतां गतः ॥ १२ ॥ तस्मिन्निर्म्मांसतां याते तपोराशित्वमागते ॥ जज्वलुः सर्वभूतानि तेजसा तस्य सर्वतः ॥ १३ ॥ उद्विग्नाश्च सुराः सर्वे तपसा तस्य भीषिताः ॥ एतस्मिन्नन्तरे ब्रह्मा परमं तोषमागतः ॥ १४ ॥ तारकस्य वरं दातुं जगाम त्रिदशालयात् ॥ प्राप्य तं शैलराजानं स गिरेः कन्दरास्थितम् ॥ उवाच तारकं देवो गिरा मधुरया युतः ॥ १५ ॥ ब्रह्मोवाच ॥ पुत्रालं तपसा तेऽस्तु नास्त्यसाध्यं तवाधुना ॥ वरं वृणीष्व रुचिरं यत्ते मनसि वर्त्तते ॥ १६ ॥ इत्युक्तस्तारको दैत्यः प्रणम्यात्मभुवं विभुम् ॥ उवाच प्राञ्जलिर्भूत्वा प्रणतः पृथुविक्रमः ॥ १७ ॥ तारक उवाच ॥ देव भूतमनोवास वेत्सि जन्तुविचेष्टितम् ॥ कृतप्रतिकृताकांक्षी जिगीषुः प्रायशो जनः ॥ १८ ॥ वयं च जातिधर्म्मेण कृतवैराः सहामरैः ॥ तैश्च निःशेषिता दैत्याः क्रूरैः सन्त्यज्य धर्म्मिताम् ॥ तेषामहं समुद्धर्त्ता भवेयमिति मे मतिः ॥ १९ ॥ अवध्यः सर्वभूतानामस्त्राणां च महौजसाम् ॥ स्यामहं परमो ह्येष वरो मम हृदि स्थितः ॥ २० ॥ एतन्मे देहि देवेश नान्यो मे रोचते वरः ॥ तमुवाच ततो दैत्यं विरिञ्चिः सुरनायकः ॥ २१ ॥ न युज्यन्ते विना मृत्युं देहिनो दैत्यसत्तम ॥ यतस्ततोऽपि वरय मृत्युं यस्मान्न शङ्कसे ॥ २२ ॥ ततः संचिन्त्य दैत्येन्द्रः शिशोर्वै सप्तवासरात् ॥ वव्रे महासुरो मृत्युमवलेपनमोहितः ॥ २३ ॥ ब्रह्मा चास्मै वरं दत्त्वा यत्किंचिन्मनसेप्सितम् ॥ जगाम त्रिदिवं देवो दैत्योऽपि स्वकमालयम् ॥ २४ ॥ उत्तीर्णं तपसस्तं तु दैत्यं दैत्येश्वरास्तथा ॥ परिवव्रुः सहस्राक्षं दिवि देवगणा यथा ॥ २५ ॥

तस्मिन्महति राज्यस्थे तारके दैत्यनन्दने ॥ ऋतवो मूर्त्तिमन्तश्च स्वकालगुणबृंहिताः ॥ २६ ॥ अभवन्किङ्कारास्तस्य लोकपालाश्च सर्वशः ॥
कान्तिर्द्युतिर्धृतिर्मेधा श्रीरवेक्ष्य च दानवम् ॥ २७ ॥ परिवव्रुर्गुणाकीर्णा निश्छिद्राः सर्व एव हि ॥ कालागुरुविलिप्ताङ्गं महामुकुटभूषणम् ॥२८॥
रुचिराङ्गदनद्धाङ्गं महासिंहासने स्थितम् ॥ वीजयन्त्यप्सरःश्रेष्ठा भृशं मुंचन्ति नैव ताः ॥ २९ ॥ चन्द्राकौं दीपमार्गेषु व्यजनेषु च मारुतः ॥
कृतान्तोऽग्रेसरस्तस्य बभूवुर्मुनिसत्तमाः ॥ ३० ॥ एवं प्रयाति काले तु वितते तारकासुरः ॥ बभाषे सचिवान्दैत्यः प्रभूतवरदर्पितः ॥ ३१ ॥
तारक उवाच ॥ राज्येन कारणं किं मे त्वनाक्रम्य त्रिविष्टपम् ॥ अनिर्याप्य सुरैर्वैरं का शान्तिर्हृदये मम ॥ ३२ ॥ भुञ्जतेऽद्यापि यज्ञांशा
नमरा नाक एव हि ॥ विष्णुः श्रियं न जहाति तिष्ठते च गतभ्रमः ॥ ३३ ॥ स्वस्थाभिः स्वर्गनारीभिः पीड्यन्तेऽमरवल्लभाः ॥ सोत्पला मदि
रामोदा दिवि क्रीडायनेषु च ॥ ३४ ॥ लब्ध्वा जन्म न यः कश्चिद्घटयेत्पौरुषं नरः ॥ जन्म तस्य वृथाभूतमजन्मा तु विशिष्यते ॥ ३५ ॥
मातापितृभ्यां न करोति कामान् बन्धूनशोकान्न करोति यो वा ॥ कीर्त्तिं हि वा नार्ज्जयते हिमाभां पुमान् स जातोऽपि मृतो मतं मे ॥३६॥
तस्माज्जयायामरपुङ्गवानां त्रैलोक्यलक्ष्मीहरणाय शीघ्रम् ॥ संयोज्यतां मे रथमष्टचक्रं बलं च मे दुर्ज्जयदैत्यचक्रम् ॥ ध्वजं च मे कांचनपट्टनद्धं
छत्रं च मे मौक्तिकजालबद्धम् ॥ ३७ ॥ तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः ॥ सेनानीर्दैत्यराजस्य तथा चक्रे बलान्वितः ॥ ३८ ॥
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः ॥ तुरगाणां सहस्रेण चक्राष्टकविभूषितम् ॥ ३९ ॥ शुक्लाम्बरपरिष्कारं चतुर्योजनविस्तृतम् ॥
नानाक्रीडागृहयुतं गीतवाद्यमनोहरम् ॥४०॥ विमानमिव देवस्य सुरभर्तुः शतक्रतोः ॥ दशकोटीश्वरा दैत्या दैत्यास्ते चण्डविक्रमाः ॥४१॥
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरस्ततः ॥ महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा ॥ ४२ ॥ मथनो जम्भकः शुम्भो दैत्येन्द्रा
दश नायकाः ॥ अन्येऽपि शतशस्तस्य पृथिवीदलनक्षमाः ॥ ४३ ॥ दैत्येन्द्रा गिरिवर्ष्माणः सन्ति चण्डपराक्रमाः ॥ नानायुधप्रहरणा
नानाशस्त्रास्त्रपारगाः॥४४॥तारकस्याभवत् केतू रौद्रः कनकभूषणः॥केतुना मकरेणापि सेनानीर्ग्रसनोऽरिहा॥४५॥पैशाचं यस्य वदनं जम्भ
स्यासीदयोमयम्॥खरं विधूतलांगूलं कुजम्भस्याभवद्ध्वजे॥४६॥महिषस्य तु गोमायुं केतौ हैमं तदाभवत् ॥ ध्वांक्षं ध्वजे तु शुम्भस्य कृष्णा

योमयमुच्छ्रितम्॥४७॥ अनेकाकारविन्यासाश्चान्येषां तु ध्वजास्तथा ॥ शतेन शीघ्रवेगाणां व्याघ्राणां हेममालिनाम् ॥ ४८ ॥ ग्रसनस्य रथो युक्तो किङ्किणीजालमालिनाम् ॥ शतेनापि च सिंहानां रथो जम्भस्य दुर्ज्जयः ॥ ४९ ॥ कुजम्भस्य रथो युक्तः पिशाचवदनैः खरैः ॥ रथस्तु महिषस्योष्ट्रैर्गजस्य तु तुरङ्गमैः ॥ ५० ॥ मेघस्य द्वीपिभिर्भीमैः कुञ्जरैः कालनेमिनः ॥ पर्वताभैः समारूढो निमिर्मत्तैर्महागजैः ॥ ५१ ॥ चतुर्दन्तैर्गन्धवद्भिः शिक्षितैर्मेघभैरवैः ॥ शतहस्तायतैः कृष्णे तुरङ्गैर्हेमभूषणैः ॥ ५२ ॥ सितचामरजालेन शोभिते दक्षिणां दिशम् ॥ सितचन्दनचार्वङ्गो नानापुष्पस्रजोज्ज्वलः ॥ ५३ ॥ मथनो नाम दैत्येन्द्रः पाशहस्तो व्यराजत ॥ जम्भकः किङ्किणीजालमालमुष्ट्रं समास्थितः ॥ ५४ ॥ कालशुक्लमहामेषमारूढः शुम्भदानवः ॥ अन्येऽपि दानवा वीरा नानावाहनगामिनः ॥ ५५ ॥ प्रचण्डचित्रकर्म्माणः कुण्डलोष्णीषभूषणाः ॥ नानाविधोत्तरासङ्गा नानामाल्यविभूषणाः ॥ ५६ ॥ नानासुगन्धिगन्धाढ्या नानावन्दिजनस्तुताः ॥ नानावाद्यपरिस्पन्दाश्चाग्रेसरमहारथाः ॥ ५७ ॥ नानाशौर्य्यकथासक्तास्तस्मिन् सैन्ये महासुराः ॥ तद्बलं दैत्यसिंहस्य भीमरूपं व्यजायत ॥ ५८ ॥ प्रमत्तचण्डमातङ्गतुरङ्गं रथसङ्कुलम् ॥ प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकिनम्॥५९॥एतस्मिन्नन्तरे वायुर्देवदूतोऽम्बरालये॥दृष्ट्वा स दानाबलं जगामेन्द्रस्य शंसितुम् ॥६० ॥ स गत्वा तु सभां दिव्यां महेन्द्रस्य महात्मनः ॥ शशंस मध्ये देवानां तत्कार्यं समुपस्थितम् ॥६१ ॥ तच्छ्रुत्वा देवराजस्तु निमीलितविलोचनः ॥ बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः ॥६२ ॥ इन्द्र उवाच ॥ सम्प्राप्नोति विमर्दोऽयं देवानां दानवैः सह ॥ कार्यं किमत्र तद्ब्रूहि नीत्युपायसमन्वितम् ॥ ६३ ॥ एतच्छ्रुत्वा तु वचनं महेन्द्रस्य गिरांपतिः ॥ इत्युवाच महाभागो बृहस्पतिरुदारधीः ॥ ६४ ॥ सामपूर्वा स्मृता नीतिश्चतुरङ्गां पताकिनीम् ॥ जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी ॥ ६५ ॥ साम भेदस्तथा दानं दण्डश्चाङ्गचतुष्टयम् ॥ नीतौ क्रमाद्देशकालरिपुयोग्यक्रमादिदम् ॥ ६६ ॥ साम दैत्येषु नैवास्ति यतस्ते लब्धसंश्रयाः ॥ जातिधर्म्मेण वा भेद्या दानं प्राप्तश्रिये च किम् ॥ ६७ ॥ एकोऽभ्युपायो दण्डोऽत्र भवता यदि रोचते ॥ दुर्ज्जनेषु कृतं साम महद्याति च बन्ध्यताम् ॥ ६८ ॥ भयादिति व्यवस्यन्ति क्रूराः साम महात्मनाम् ॥ ऋजुतामार्य्यबुद्धित्वं दयानीतिव्यतिक्रमम् ॥ ६९ ॥ मन्यन्ते दुर्ज्जना नित्यं साम चापि भयादयात् ॥ तस्माद्दुर्ज्जन

माक्रान्तुं श्रेयान्पौरुषसंश्रयः ॥ ७० ॥ आक्रान्ते तु क्रिया युक्ता सतामेतन्महाव्रतम् ॥ दुर्जनः सुजनत्वाय कल्पते न कदाचन ॥ ७१ ॥ सुजनोऽपि स्वभावस्य त्यागं वाञ्छेत्कदाचन ॥ एवं मे बुद्ध्यते बुद्धिर्भवन्तोऽत्राध्यवस्यताम् ॥७२॥ एवमुक्तः सहस्राक्ष एवमेवेत्युवाच तम् ॥ कर्त्तव्यतां स सञ्चिन्त्य प्रोवाचामरसंसदि ॥ ७३ ॥ इन्द्र उवाच ॥ सावधानेन मे वाचं शृणुध्वं नाकवासिनः ॥ भवन्तो यज्ञभोक्तारस्तुष्टात्मानोऽतिसात्त्विकाः ॥ ७४ ॥ स्वे महिम्नि स्थिता नित्यं जगतः परिपालकाः ॥ भवतश्चानिमित्तेन बाधन्ते दानवेश्वराः ॥ ७५ ॥ तेषां सामादि नैवास्ति दण्ड एव विधीयताम् ॥ क्रियतां समरोद्योगः सैन्यं संयुज्यतां मम ॥ ७६ ॥ आधीयन्तां च शस्त्राणि पूज्यन्तामस्त्रदेवताः ॥ वाहनानि च यानानि योजयन्तु सहामराः ॥ ७७ ॥ यमं सेनापतिं कृत्वा शीघ्रमेव दिवौकसः ॥ इत्युक्ताः समनह्यन्त देवानां ये प्रधानतः ॥७८॥ वाजिनामयुतेनाजौ हेमघण्टापरिष्कृतम् ॥ नानाश्चर्यगुणोपेतं सम्प्राप्तं सर्वदैवतैः ॥ ७९ ॥ रथं मातलिना क्लृप्तं देवराजस्य दुर्जयम् ॥ यमो महिषमास्थाय सेनाग्रे समवर्त्तत ॥ ८० ॥ चण्डकिङ्करवृन्देन सर्वतः परिवारितः ॥ कल्पकालोद्धतज्वालापूरिताम्बरलोचनः ॥ ८१ ॥ हुताशनश्छागरूढः शक्तिहस्तो व्यवस्थितः ॥ पवनोऽङ्कुशपाणिस्तु विस्तारितमहाजवः ॥ ८२ ॥ भुजगेन्द्रसमारूढो जलेशो भगवान्स्वयम् ॥ नरयुक्तरथे देवो राक्षसेशो वियच्चरः ॥ ८३ ॥ तीक्ष्णखड्गयुतो भीमः समरे समवस्थितः ॥ महासिंहरवो देवो धनाध्यक्षो गदायुधः ॥ ८४ ॥ चन्द्रादित्यावश्विनौ च चतुरङ्गबलान्वितौ ॥ राजभिः सहितास्तस्थुर्गन्धर्वा हेमभूषणाः ॥ ८५ ॥ हेमपीठोत्तरासङ्गाश्चित्रवर्म्मरथायुधाः ॥ नाकपृष्ठशिखण्डास्तु वैदूर्यमकरध्वजाः ॥ ८६ ॥ जवारक्तोत्तरासङ्गा राक्षसा रक्तमूर्द्धजाः ॥ गृध्रध्वजा महावीर्या निर्मलायोविभूषणाः ॥ ८७ ॥ मुसलासिगदाहस्ता रथे चोष्णिपदंशिताः ॥ महामेघरवा नागा भीमोल्काशनिहेतयः ॥ ८८ ॥ यक्षाः कृष्णाम्बरभृतो भीमबाणधनुर्द्धराः ॥ ताम्रोलूकध्वजा रौद्रा हेमरत्नविभूषणाः ॥ ८९ ॥ द्वीपिचर्म्मोत्तरासङ्गं निशाचरबलं बभौ ॥ गार्ध्रपत्रध्वजप्रायमस्थिभूषणभूषितम् ॥ ९० ॥ मुसलायुधदुष्प्रेक्ष्यं नानाप्राणिमहारवम् ॥ किन्नराः श्वेतवसनाः सितपत्रिपताकिनः ॥ ९१॥ मत्तेभवाहनप्रायास्तीक्ष्णतोमरहेतयः ॥ मुक्ताजालपरिष्कारो हंसो रजतनिर्म्मितः ॥ ९२ ॥ केतुर्जलाधिनाथस्य भीमधूमध्वजानलः ॥ पद्मरागमहारत्नविटपं धन

दस्य तु ॥ ९३ ॥ ध्वजं समुच्छ्रितं भाति गन्तुकाममिवाम्बरम् ॥ वृकेण काष्ठलोहेन यमस्यासीन्महाध्वजः ॥ ९४ ॥ राक्षसेशस्य केतौर्वै प्रेतस्य मुखमाबभौ ॥ हेमसिंहध्वजौ देवौ चन्द्रार्कावमितद्युती ॥ ९५॥ कुम्भेन रत्नचित्रेण केतुरश्विनयोरभूत् ॥ हेममातङ्गरचितं चित्ररत्न परिष्कृतम् ॥ ९६ ॥ ध्वजं शतक्रतोरासीत् सितचामरमण्डितम् ॥ सनागयक्षगन्धर्वमहोरगनिशाचरा ॥ ९७ ॥ सेना सा देवराजस्य दुर्जया भुवनत्रये ॥ कोटयस्तास्त्रयस्त्रिंशद्देवे देवनिकायिनाम् ॥ ९८ ॥ हिमाचलाभे सितकर्णचामरे सुवर्णपद्मामल सुन्दरस्रजि ॥ कृताभिरागोज्ज्वलकुङ्कुमाङ्कुरे कपोललीलालिकदम्बसङ्कुले ॥ ९९ ॥ स्थितस्तदैरावतनामकुञ्जरे महाबलश्चित्र विभूषणाम्बरः ॥ विशालवल्गांशुवितानभूषितः प्रकीर्णकेयूरभुजाग्रमण्डलः ॥ सहस्रदृग्वन्दिसहस्रसंस्तुतस्त्रिविष्टपेऽशोभत पाक शासनः ॥ १०० ॥ तुरङ्गमातङ्गबलौघसङ्कुला सितातपत्रध्वजराजिशालिनी ॥ चमूश्च सा दुर्जयपत्रिसन्तता विभाति नानायुधयोध दुस्तरा ॥ १०१ ॥ इति श्रीमात्स्ये महापुराणे तारकोपाख्याने रणयोजनो नामाष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ छ ॥ सूत उवाच ॥ सुरासुराणां संमर्दस्तस्मिन्नत्यन्तदारुणे ॥ तुमुलोऽतिमहानासीत्सेनयोरुभयोरपि ॥ १ ॥ गर्जतां देवदैत्यानां शङ्खभेरीरवेण च ॥ तूर्याणां चैव निर्घोषैर्मातङ्गानां च बृंहितैः ॥ २ ॥ हेषतां हयवृन्दानां रथनेमिस्वनेन च ॥ ज्याघोषेण च शूराणां तुमुलोऽतिमहानभूत् ॥ ३ ॥ समासाद्योभये सेने परस्परजयैषिणाम् ॥ रोषेणातिपरीतानां त्यक्तजीवितचेतसाम् ॥ ४ ॥ समासाद्य तु तेऽन्योन्यं प्रक्रमेण विलोमतः ॥ रथेनासक्तपादातो रथेन च तुरङ्गमः ॥ ५ ॥ हस्ती पदातिसंयुक्तो रथिना च क्वचिद्रथी ॥ मातङ्गेनापरो हस्ती तुरङ्गैर्बहुभिर्गजः ॥ ६ ॥ पदातिरेको बहुभिर्गजैर्मत्तैश्च युज्यते ॥ ततः प्रासाशनिगदाभिन्दिपालपरश्वधैः ॥ ७ ॥ शक्तिभिः पट्टिशैः शूलैर्मुद्गरैः कुणपैर्गडैः ॥ चक्रैश्च शङ्कुभिश्चैव तोमरैरङ्कुशैः सितैः ॥ ८ ॥ कर्णिनालीकनाराचवत्सदन्तार्द्धचन्द्रकैः ॥ भल्लैश्च शतपत्रैश्च शुक तुण्डैश्च निर्म्मलैः ॥ ९ ॥ वृष्टिरत्यद्भुताकारा गगने समदृश्यत ॥ सम्प्रच्छाद्य दिशः सर्वास्तमोमयमिवाकरोत् ॥ १० ॥ न प्राज्ञायंत तेऽन्योऽन्यं तस्मिंस्तमसि सङ्कुले ॥ अलक्ष्यं विसृजन्तस्ते हेतिसङ्घातमुद्धतम् ॥ ११ ॥ पतितं सेनयोर्मध्ये निरीक्षन्ते परस्परम् ॥ ततो

ध्वजैर्भुजैश्छत्रैः शिरोभिश्च सकुण्डलैः ॥ १२ ॥ गजैस्तुरङ्गैः पादातैः पतद्भिः पतितैरपि ॥ आकाशसरसो भ्रष्टैः पङ्कजैरिव भूस्तृता ॥ १३ ॥ भग्नदन्ता भिन्नकुम्भाश्छिन्नदीर्घमहाकराः ॥ गजाः शैलनिभाः पेतुर्धरण्यां रुधिरस्रवाः ॥ १४ ॥ भग्नेषादण्डचक्राक्षा रथाश्च शकलीकृताः ॥ पेतुः शकलतां यातास्तुरङ्गाश्च सहस्रशः ॥ १५ ॥ ततो सृग्ह्रददुस्तारा पृथिवी समजायत ॥ नद्यश्च रुधिरावर्ता हर्षदा पिशिताशिनाम् ॥ वेतालक्रीडमभवत्तत्संकुलरणाजिरम् ॥ १६ ॥ इति श्रीमात्स्ये महापुराणे तारकासुरोपाख्याने देवासुरयुद्धं नामैकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥ सूत उवाच ॥ अथ ग्रसनमालोक्य यमः क्रोधविमूर्च्छितः ॥ ववर्ष शरवर्षेण त्रिशिखाग्निशिखोज्ज्वलाम् ॥ १ ॥ स विद्धो बहुभिर्बाणैर्ग्रसनोऽतिपराक्रमः ॥ कृतप्रतिकृताकांक्षी धनुरानम्य भैरवम् ॥ २ ॥ शतैः पञ्चभिरत्युग्रैः शराणां यममर्दयत् ॥ स विचिन्त्य यमो बाणान्ग्रसनस्यातिपौरुषम् ॥ ३ ॥ बाणवृष्टिभिरुग्राभिर्यमो ग्रसनमर्दयत् ॥ कृतान्तशरवृष्टिं तां वियति प्रतिसर्पिणीम् ॥ ४ ॥ चिच्छेद शरवर्षेण ग्रसनो दानवेश्वरः ॥ विफलां तां समालोक्य यमस्तां शरसन्ततिम् ॥ ५ ॥ ॥ स विचिन्त्य शरव्रातं ग्रसनस्य रथं प्रति ॥ चिक्षेप मुद्गरं घोरं तरसा तस्य चान्तकः ॥ ६ ॥ स तं मुद्गरमायान्तमुत्प्लुत्य गगनास्थितम् ॥ जग्राह वामहस्तेन याम्यं दानवनन्दनः ॥ ७ ॥ तमेव मुद्गरं गृह्य यमस्य महिषं रुषा ॥ पातयामास वेगेन स पपात महीतले ॥ ८ ॥ उत्प्लुत्याथ यमस्तस्मान्महिषान्निष्पतिष्यतः ॥ प्रासेन ताडयामास ग्रसनं वदने दृढम् ॥ ९ ॥ स तु प्रासप्रहारेण मूर्च्छितो न्यपतद्भुवि ॥ ग्रसनं पतितं दृष्ट्वा जम्भो भीमपराक्रमः ॥ १० ॥ यमस्य भिन्दिपालेन प्रहारमकरोद्धृदि ॥ यमस्तेन प्रहारेण सुस्राव रुधिरं मुखात् ॥ ११ ॥ कृतान्तमर्दितं दृष्ट्वा गदापाणिर्धनाधिपः ॥ वृतो यक्षायुतशतैर्जम्भं प्रत्युद्ययौ रुषा ॥ १२ ॥ जम्भो रुषा तमायांतं दानवानीकसंवृतः ॥ उवाच प्राज्ञो वाक्यं तु यथा स्निग्धेन भाषितम् ॥ १३ ॥ ग्रसनो लब्धसंज्ञोऽथ यमस्य प्राहिणोद्गदाम् ॥ मणिहेमपरिष्कारां गुर्वीमारिविमर्दिनीम् ॥ १४ ॥ तामप्रतर्क्यां संप्रेक्ष्य गदां महिषवाहनः ॥ गदायाः प्रतिघातार्थं जगद्दलनभैरवम् ॥ १५ ॥ दण्डं मुमोच कोपेन ज्वालामालासमाकुलम् ॥ स गदां वियति प्राप्य ररासाम्बुधरो यथा ॥ १६ ॥ सङ्घट्टमभवत्ताभ्यां शैलाभ्यामिव दुःसहम् ॥ ताभ्यां निष्पेषनिर्ह्रादजडीकृतदिगन्तरम् ॥ १७ ॥ जगद्व्याकुलतां यातं प्रल

गतिर्ज्ञानतपसां या गतिर्यज्ञयाजिनाम् ॥ १० ॥ अविमुक्ते मृतानां तु सा गतिर्विहिता शुभा ॥ संहर्त्तारश्च कर्तारस्तस्मिन्ब्रह्मादयः सुराः ॥ ११ ॥ सम्राड्विराण्मया लोका जायन्ते ह्यपुनर्भवाः ॥ महर्जनस्तपश्चैव सत्यलोकस्तथैव च ॥ १२ ॥ मनसः परमो योगो भूत भव्य भवस्य च ॥ ब्रह्मादिस्थावरान्तस्य योनौ सांख्यादिमोक्षयोः ॥ १३ ॥ येऽविमुक्तं न मुञ्चन्ति नरास्ते नैव वंचिताः ॥ उत्तमं सर्वतीर्थानां स्थानानामुत्तमं च यत् ॥ १४ ॥ क्षेत्राणामुत्तमं चैव श्मशानानां तथैव च ॥ तटाकानां च सर्वेषां कूपानां स्रोतसां तथा ॥ १५ ॥ शैलानामुत्तमं चैतत्तडागानां तथोत्तमम् ॥ पुण्यकृद्भवभक्तैश्च ह्यविमुक्त तु सेव्यते ॥१६ ॥ ब्रह्मगः परमं स्थानं ब्रह्मणाध्यासितं च यत् ॥ ब्रह्मणा सेवितं नित्यं ब्रह्मणा चैव रक्षितम् ॥ १७॥ अत्रैव सप्तभुवनं काश्चनो मेरुपर्वतः ॥ मनसः परमो योगः प्रीत्यर्थं ब्रह्मणः स तु ॥१८॥ ब्रह्मा तु तत्र भगवांस्त्रिसन्ध्यं चेश्वरे स्थितः ॥ पुण्यात्पुण्यतमं क्षेत्रं पुण्यकृद्भिर्निषेवितम् ॥१९॥ आदित्योपासनं कृत्वा विप्राश्चामरतां गताः ॥ अन्येऽपि ये त्रयो वर्णा भवभक्त्या समाहिताः ॥ २० ॥ अविमुक्ते तनुं त्यक्त्वा गच्छन्ति परमां गतिम् ॥ अष्टौ मासान्विहारस्य यतीनां संयतात्मनाम् ॥ २१ ॥ एकत्र चतुरो मासान्मासौ वा निवसेत्पुनः ॥ अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥ २२ ॥ न देहो भविता तत्र दृष्टं शास्त्रे पुरातने ॥ मोक्षो ह्यसंशयस्तत्र पञ्चत्वं तु गतस्य वै ॥ २३ ॥ स्त्रियः पतिव्रतायाश्च भवभक्ताः समाहिताः ॥ अविमुक्ते विमुक्तास्ता यास्यन्ति परमां गतिम् ॥ २४ ॥ अन्या याः कामचारिण्यः स्त्रियो भोगपरायणाः ॥ कालेन निधनं प्राप्ता गच्छन्ति परमां गतिम्॥२५॥ यत्र योगश्च मोक्षश्च प्राप्यते दुर्लभो नरैः॥अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम् ॥२६ ॥ सर्वात्मना तपः सेव्यं ब्राह्मणैर्नात्र संशयः ॥ अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः ॥ २७ ॥ यतो मया न मुक्तं हि त्वविमुक्तं ततः स्मृतम् ॥ अविमुक्तं न सेवन्ते मूढा ये तमसावृताः ॥ २८ ॥ विण्मूत्ररेतसां मध्ये ते वसन्ति पुनःपुनः ॥ कामः क्रोधश्च लोभश्च दम्भस्तम्भोऽतिमत्सरः ॥ २९ ॥ निद्रा तन्द्रा तथालस्यं पैशुन्यमिति ते दश ॥ अविमुक्ते स्थिताः विघ्नाः शक्रेण विहिता स्वयम् ॥ ३० ॥ विनायकोपसर्गाश्च सततं मूर्ध्नि तिष्ठति ॥ पुण्यमेतद्भवेत्सर्वं भक्तानामनुकम्पया ॥ ३१ ॥ परं गुह्यमिति ज्ञात्वा ततः शास्त्रानुदर्शनात् ॥ व्याहृतं देवदेवेस्तु मुनिभिस्तत्त्व

दर्शिभिः ॥ ३२ ॥ मेदसा विप्लुता भूमिरविमुक्ते तु वर्ज्जिता ॥ पूता समभवत्सर्वा महादेवेन रक्षिता ॥ ३३ ॥ संस्कारस्तेन क्रियते भूमेरन्यत्र सूरिभिः ॥ ये भक्त्या वरदं देवमक्षरं परमं पदम् ॥ ३४ ॥ देवदानवगन्धर्वयक्षरक्षोमहोरगाः ॥ अविमुक्तमुपासन्ते तन्निष्ठास्तत्परायणाः ॥ ३५ ॥ ते विशन्ति महादेवमाज्याहुतिरिवानलम् ॥ तं वै प्राप्य महादेवमीश्वराध्युषितं शुभम् ॥ ३६ ॥ अविमुक्तं कृतार्थोऽस्मीत्यात्मानमुपलभ्यतं ॥ ऋषिदेवासुरगणैर्जपहोमपरायणैः ॥ ३७ ॥ यतिभिर्मोक्षकामैश्च ह्यविमुक्तं निषेव्यते ॥ नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ॥ ३८ ॥ ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥ द्वियोजनमथार्द्धं च तत्क्षेत्रं पूर्वपश्चिमम् ॥ ३९ ॥ अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्मृतम् ॥ वाराणसी तदीया च यावच्छुक्लनदी तु वै ॥ ४० ॥ एष क्षेत्रस्य विस्तारः प्रोक्तो देवेन धीमता ॥ लब्ध्वा योगं च मोक्षं च कांक्षन्तो ज्ञानमुत्तमम् ॥ ४१ ॥ अविमुक्तं न मुञ्चन्ति तन्निष्ठास्तत्परायणाः ॥ तस्मिन्वसन्ति ये मर्त्या न ते शोच्याः कदाचन ॥ ४२ ॥ योगक्षेत्रं तपःक्षेत्रं सिद्धगन्धर्वसेवितम् ॥ सरितः सागराः शैला नाविमुक्तसमा भुवि ॥ ४३ ॥ भूर्लोके चान्तरिक्षे च दिवि तीर्थानि यानि च ॥ अतीत्य वर्त्तते चान्यदविमुक्तं प्रभावतः ॥ ४४ ॥ ये तु ध्यानं समासाद्य युक्तात्मानः समाहिताः ॥ सन्नियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम् ॥ ४५ ॥ अविमुक्ते स्थिता नित्यं कृतार्थास्ते द्विजातयः ॥ भवभक्तिं समासाद्य रमन्ते तु सुनिश्चिताः ॥ ४६ ॥ संहृत्य शक्तितः कामान्विषयेभ्यो बहिः स्थिताः ॥ शक्तितः सर्वतो मुक्ताः शक्तितस्तपसि स्थिताः ॥ ४७ ॥ करणानीह चात्मानमपुनर्भवभाविताः ॥ तं वै प्राप्य महात्मानमीश्वरं निर्भयाः स्थिताः ॥ ४८ ॥ न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ अविमुक्ते तु गृह्यन्ते भवेन विभुना स्वयम् ॥ ४९ ॥ उत्पादितं महाक्षेत्रं सिद्ध्यन्ते यत्र मानवाः ॥ उद्देशमात्रं कथिता अविमुक्तगुणास्तथा ॥ ५० ॥ समुद्रस्येव रत्नानामविमुक्तस्य विस्तरम् ॥ मोहनं तदभक्तानां भक्तानां भक्तिवर्द्धनम् ॥ ५१ ॥ मूढास्ते तु न पश्यन्ति श्मशानमिति मोहिताः ॥ हन्यमानोऽपि यो विद्वान्वसेद्विघ्नशतैरपि ॥ ५२ ॥ स याति परमं स्थानं यत्र गत्वा न शोचति ॥ जन्ममृत्युजरामुक्तः परं याति शिवालयम् ॥ ५३ ॥ अपुनर्मरणानां हि सा गतिर्मोक्षकांक्षिणाम् ॥ यां प्राप्य कृतकृत्यः स्यादिति मन्येत पण्डितः ॥ ५४ ॥ न दानेन तपोभिर्वा न यज्ञैर्नापि विद्यया ॥ प्राप्यते गतिरिष्टा या ह्यविमुक्ते तु

लभ्यते ॥ ५५ ॥ नानावर्णा विवर्णाश्च चण्डाला ये जुगुप्सिताः ॥ किल्बिषैः पूर्णदेहाश्च प्रकृष्टैः पातकैस्तथा ॥ ५६ ॥ भेषजं परमं तेषामवि मुक्तं विदुर्बुधाः ॥ जात्यन्तरसहस्रेषु ह्यविमुक्ते म्रियेत यः ॥ ५७ ॥ भक्तो विश्वेश्वरे देवे न स भूयोऽभिजायते ॥ यत्र चेष्टं हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ ५८ ॥ सर्वमक्षयमेतस्मिन्नविमुक्ते न संशयः ॥ कालेनोपरता यान्ति भवे सायुज्यमक्षयम् ॥ ५९ ॥ कृत्वा पापसहस्राणि पश्चात्सन्तापमेत्य वै ॥ योऽविमुक्ते वियुज्येत स याति परमां गतिम् ॥ ६० ॥ उत्तरं दक्षिणं चापि अयनं न विकल्पयेत् ॥ सर्वस्तेषां शुभः कालो ह्यविमुक्ते म्रियन्ति ये ॥ ६१ ॥ न तत्र कालो मीमांस्यः शुभो वा यदि वाऽशुभः ॥ तस्य देवस्य माहात्म्यस्थानमद्भुतकर्म्मणः ॥ सर्वेषामेव नाथस्य सर्वेषां विभुना स्वयम् ॥६२॥ श्रुत्वेदमृषयः सर्वे स्कन्देन कथितं पुरा ॥ अविमुक्ताश्रमं पुण्यं भावयत्करणैः शुभैः ॥६३॥ इति श्रीमात्स्ये महापुराणेऽविमुक्तमाहात्म्यं नाम चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ सूत उवाच ॥ अविमुक्ते महापुण्ये आस्तिकाः शुभदर्शनाः ॥ विस्मयं परमं जग्मुर्हर्षगद्गदनिस्वनाः ॥१॥ ऊचुस्ते हृष्टमनसः स्कन्दं ब्रह्मविदां वरम् ॥ ब्रह्मणो देव पौत्रस्त्वं ब्रह्मण्यो ब्रह्मणः प्रियः ॥ २ ॥ ब्राह्मणो ब्रह्मविद्ब्रह्मो ब्रह्मेन्द्रो ब्रह्मलोककृत् ॥ ब्रह्मकृद्ब्रह्मचारी त्वं ब्रह्मादिर्ब्रह्मवत्सलः ॥ ३ ॥ ब्रह्मतुल्योऽब्रह्मकरो ब्रह्मतुल्य नमोऽस्तु ते ॥ ऋषयो भावितात्मानः श्रुत्वेदं पावनं महत् ॥४॥ तत्त्वं तु परमं ज्ञातं यज्ज्ञात्वाऽमृतमश्नुते ॥ स्वस्ति तेऽस्तु गमिष्यामो भूर्लोकं शङ्करालयम् ॥ ५ ॥ यत्रासौ सर्वभूतात्मा स्थाणुभूतः स्थितः प्रभुः ॥ सर्वलोकहितार्थाय तपस्युग्रे व्यवस्थितः ॥ ६ ॥ संयोज्य योगेनात्मानं रौद्रीं तनुमुपाश्रितः ॥ गुह्यकैरात्मभूतस्तु आत्मतुल्यगुणैर्वृतः ॥ ७ ॥ ततो ब्रह्मादिभिर्देवैः सिद्धैश्च परमर्षिभिः ॥ विज्ञप्तः परया भक्त्या त्वत्प्रसादाद्गणेश्वर ॥ ८ ॥ वस्तुमिच्छाम नियतमविमुक्ते सुनिश्चिताः ॥ एवंगुणे तथा मर्त्या ह्यविमुक्ते वसन्ति ये ॥९॥ धर्म्मशीला जितक्रोधा निर्म्ममा नियतेन्द्रियाः ॥ ध्यानयोगपराः सिद्धिं गच्छन्ति परमाव्ययाम् ॥ १० ॥ योगिनो योगसिद्धाश्च योगमोक्षप्रदं विभुम् ॥ उपासते भक्तियुक्ताः शान्ता योगगतिं गताः॥११॥ स्थानं गुह्यं श्मशानानां सर्वेषामेतदुच्यते ॥ न हि योगादृते मोक्षः प्राप्यते भुवि मानवैः ॥१२॥ अविमुक्ते तु वसतां योगो मोक्षश्च सिद्ध्यति ॥ अनेन जन्मनैवेह प्राप्यते गतिरुत्तमा ॥१३॥ अविमुक्ते निवसता व्यासेनामिततेजसा॥ नैव लब्धा

काचिद्भिक्षा भ्रममाणेन यत्नतः॥ १४॥ क्षुधाविष्टस्ततः क्रुद्धोऽचिन्तयच्छापमुत्तमम् ॥दिनं दिनं प्राति व्यासः षण्मासं योवतिष्ठति ॥ १५॥ कथ
ममेदं नगरं भिक्षादोषाद्धतं त्विदम् ॥ विप्रो वा क्षत्रियो वापि ब्राह्मणी विधवापि वा ॥ १६ ॥ संस्कृतासंस्कृता वापि परिपक्वाः कथं नु मे ॥
न प्रयच्छन्ति वे लोका ब्राह्मणाश्चर्यकारकम् ॥ १७ ॥ एषां शापं प्रदास्यामि तीर्थस्य नगरस्य तु ॥ तीर्थं चातीर्थतां यातु नगरं शापयाम्य
हम् ॥ १८ ॥ मा भूत्त्रिपौरुषी विद्या मा भूत्त्रिपौरुषं धनम् ॥ मा भूत्त्रिपौरुषं सख्यं व्यासो वाराणसीं शपन् ॥ १९ ॥ अविमुक्ते निवसतां
जनानां पुण्यकर्म्मणाम् ॥ विघ्नं सृजामि सर्वेषां येन सिद्धिर्न विद्यते ॥ २० ॥ व्यासचिंतं तदा ज्ञात्वा देवदेव उमापतिः ॥ भीतभीतस्तदा
गौरीं तां प्रियां पर्यभाषत ॥ २१ ॥ शृणु देवि वचो मह्यं यादृशं प्रत्युपस्थितम् ॥ कृष्णद्वैपायनः कोपाच्छापं दातुं समुद्यतः ॥ २२ ॥
देव्युवाच ॥ किमर्थं शपते क्रुद्धो व्यासः केन प्रकोपितः ॥ किं कृतं भगवंस्तस्य येन शापं प्रयच्छति ॥२३॥ देवदेव उवाच ॥ अनेन सुतप
स्तप्तं बहून्वर्षगणान्प्रिये ॥ मौनिना ध्यानयुक्तेन द्वादशाब्दान्वरानने ॥ २४ ॥ ततः क्षुधा समुत्पन्ना भिक्षामटितुमागतः ॥ नैवास्य केन
चिद्भिक्षा प्रासार्द्धमपि भामिनि॥२५॥ एवं भगवतः काल आसीत्षाण्मासिको मुनेः ॥ ततः क्रोधपरीतात्मा शापं दास्यति सोऽधुना ॥२६ ॥
यावन्नैष शपेत्तावदुपायस्तत्र चिन्त्यताम् ॥ कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रिये ॥ २७ ॥ कोऽस्य शापान्न बिभेति ह्यपि साक्षात्पिता
महः ॥ अदेवं दैवतं कुर्याद्देवं चाप्यपदैवतम् ॥२८ ॥ आवां तु मानुषौ भूत्वा गृहस्थाविह वासिनौ ॥ तस्य तृप्तिकरीं भिक्षां प्रयच्छावो वरा
नने ॥ २९ ॥ एवमुक्ता ततो देवी देवेन शम्भुना तदा ॥ व्यासस्य दर्शनं दत्त्वा कृत्वा वेषं तु मानुषम् ॥ ३० ॥ एह्येहि भगवन् सद्यो भिक्षां
ग्राहय सत्तम ॥ अस्मद्गृहे कदाचित्त्वं नागतोऽसि महामुने ॥३१॥ एतच्छ्रुत्वा प्रीतमनाः भिक्षां ग्रहीतुमागतः ॥ भिक्षां दत्त्वा तु व्यासाय षड्रसा
ममृतोपमाम् ॥ ३२ ॥ अनास्वादितपूर्वा सा भक्षिता मुनिना तदा ॥ भिक्षां व्यासस्ततो भुक्त्वा चिन्तयन् हृष्टमानसः ॥३३॥ ववन्दे वरदं
देवं देवीं च गिरिजां तदा ॥ व्यासः कमलपत्राक्ष इदं वचनमब्रवीत् ॥ ३४ ॥ देवो देवी नदी गङ्गा मिष्टमन्नं शुभा गतिः ॥ वाराणस्यां विशा
लाक्षि वासः कस्य न रोचते ॥ ३५ ॥ एवमुक्त्वा ततो व्यासो नगरीमवलोकयन् ॥ चिन्तयानस्ततो भिक्षां हृदयानन्दकारिणीम् ॥ ३६ ॥

अपश्यत्पुरतो देवं देवीं च गिरिजां तदा ॥ गृहाङ्गणस्थितं व्यासं देवदेवोऽब्रवीदिदम् ॥ ३७ ॥ इह क्षेत्रे न वस्तव्यं क्रोधनस्त्वं महामुने ॥ एवं विस्मयमापन्नो देवं व्यासोऽब्रवीद्वचः ॥ ३८ ॥ व्यास उवाच ॥ चतुर्दश्यामथाष्टम्यां प्रवेशं दातुमर्हसि ॥ एवमस्त्वित्यनुज्ञाय तत्रैवान्तरधीयत ॥३९॥ न तद्गृहं न सा देवी न देवो ज्ञायते क्वचित् ॥ एवं त्रैलोक्यविख्यातः पुरा व्यासो महातपाः ॥४०॥ ज्ञात्वा क्षेत्रगुणान् सर्वान् स्थितस्तस्यैव पार्श्वतः ॥ एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं शंसन्ति पण्डिताः ॥४१॥ अविमुक्तगुणानां तु कः समर्थो वदिष्यति ॥ देवब्राह्मणविद्विष्टा देवभक्तिविडम्बकाः ॥ ४२ ॥ ब्रह्मघ्नाश्च कृतघ्नाश्च तथा नैष्कृतिकाश्च ये ॥ लोकद्विषो गुरुद्विषस्तीर्थायतनदूषकाः ॥ ४३ ॥ सदा पापरताश्चैव ये चान्ये कुत्सिता भुवि ॥ तेषां नास्तीति वासो वै स्थितोऽसौ दण्डनायकः ॥ ४४ ॥ रक्षणार्थं नियुक्तं वै दण्डनायकमुत्तमम् ॥ पूजयित्वा यथाशक्त्या गन्धपुष्पादिधूपकैः ॥ ४५ ॥ नमस्कारं ततः कृत्वा नायकस्य तु मन्त्रवित् ॥ सर्ववर्णावृते क्षेत्रे नानाविधसरीसृपे ॥ ४६ ॥ ईश्वरानुगृहीता हि गतिं गाणेश्वरीं गताः ॥ ननारूपधरा दिव्या नानावेषधरास्तथा ॥ ४७ ॥ सुरा वै ये तु सर्वे च तन्निष्ठास्तत्परायणाः ॥ यदिच्छन्ति परं स्थानमक्षयं तदवाप्नुयुः ॥ ४८ ॥ परं पुरं देवपुराद्विशिष्यते तदुत्तरं ब्रह्मपुरात्पुरः स्थितम् ॥ तपोबलादीश्वरयोगनिर्म्मितं न तत्समं ब्रह्मदिवौकसालयम् ॥ मनोरमं कामगमं ह्यनामयमतीत्य तेजांसि तपांसि योगवत् ॥४९॥ अधिष्ठितस्तु तत्स्थाने देवदेवो विराजते ॥ तपांसि यानि तप्यन्ते व्रतानि नियमाश्च ये ॥ ५० ॥ सर्वतीर्थाभिषेकं तु सर्वदानफलानि च ॥ सर्वयज्ञेषु यत्पुण्यमविमुक्ते तदाप्नुयात् ॥५१॥ अतीतं वर्त्तमानं च अज्ञानाज्ज्ञानतोऽपि वा ॥ सर्वं तस्य च यत्पापं क्षेत्रं दृष्ट्वा विनश्यति॥५२॥ शान्तैर्दान्तैस्तपस्ततं यत्किञ्चिद्धर्म्मसंज्ञितम् ॥ सर्वं च तदवाप्नोति अविमुक्ते जितेन्द्रियः ॥ ५३ ॥ अविमुक्तं समासाद्य लिङ्गमर्च्चयते नरः ॥ कल्पकोटिशतैश्चापि नास्ति तस्य पुनर्भवः ॥ ५४ ॥ अमरा ह्यक्षयाश्चैव क्रीडन्ति भवसन्निधौ ॥ क्षेत्रतीर्थोपनिषदमविमुक्तं न संशयः ॥ ५५ ॥ अविमुक्ते महादेवमर्च्चयन्ति स्तुवन्ति वै ॥ सर्वपापविनिर्म्मुक्तास्ते तिष्ठन्त्यजरामराः ॥ ५६ ॥ सर्वकामाश्च ये यज्ञाः पुनरावृत्तिकाः स्मृताः ॥ अविमुक्ते मृता ये च सर्वे ते ह्यनिवर्त्तकाः ॥ ५७ ॥ ग्रहनक्षत्रताराणां कालेन पतनाद्भयम् ॥ अविमुक्ते मृतानां तु पतनं नैव विद्यते ॥ ५८ ॥ कल्प

कोटिसहस्रैस्तु कल्पकोटिशतैरपि ॥ न तेषां पुनरावृत्तिर्मृता ये क्षेत्र उत्तमे ॥ ५९ ॥ संसारसागरे घोरे भ्रमन्तः कालपर्ययात् ॥ अविमुक्तं समासाद्य गच्छन्ति मणिकर्णिकाम् ॥६० ॥ ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ॥ अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि ॥६१ ॥ अविमुक्तं प्रविष्टस्तु यदि गच्छेत्ततः पुनः॥ तदा हसन्ति भूतानि अन्योन्यं करताडनम्॥६२॥ कामक्रोधेन लोभेन ग्रस्ता ये भुवि मानवाः ॥ निष्क्रमन्ते नरा देवि दण्डनायकमोहिताः॥६३॥जपध्यानविहीनानां ज्ञानवर्जितचेतसाम्॥ततो दुःखहतानां च गतिर्वाराणसी नृणाम् ॥६४ ॥ तीर्थानां पंचकं सारं विश्वेशानन्दकानने॥दशाश्वमेधं लोलार्कः केशवो बिन्दुमाधवः॥६५॥पंचमी तु महाश्रेष्ठा प्रोच्यते मणिकर्णिका॥एभिस्तु तीर्थवर्यैश्च वर्ण्यते ह्यविमुक्तकम्॥६६॥एक एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि ॥ एकेन जन्मना देवि मोक्षं पश्यन्त्यनुत्तमम् ॥६७ ॥ एतद्वै कथितं सर्वं देव्यै देवेन भाषितम् ॥ अविमुक्तस्य क्षेत्रस्य तत्सर्वं कथितं द्विजाः ॥ ६८ ॥ इति श्रीमात्स्ये महापुराणेऽविमुक्तमाहात्म्यं नाम पंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ऋषय ऊचुः ॥ माहात्म्यमविमुक्तस्य यथावत् कथितं त्वया ॥ इदानीं नर्मदायास्तु माहात्म्यं वद सत्तम ॥ १ ॥ यत्रोङ्कारस्य माहात्म्यं कपिलासङ्गमस्य च ॥ अमरेशस्य चैवाहुर्माहात्म्यं पापनाशनम् ॥ २ ॥ कथं प्रलयकाले तु न नष्टा नर्म्मदा पुरा ॥ मार्कण्डेयश्च भगवान्न विनष्टस्तदा किल ॥ त्वयोक्तं तादिदं सर्वं पुनर्विस्तरतो वद ॥३ ॥ सूत उवाच ॥ एतदेव पुरा पृष्टः पाण्डवेन महात्मना ॥ नर्म्मदायास्तु माहात्म्यं मार्कण्डेयो महामुनिः ॥ ४ ॥ उग्रेण तपसा युक्तो वनस्थो वनवासिना ॥ पृष्टः पूर्वं महागाथां धर्मपुत्रेण धीमता ॥५॥ युधिष्ठिर उवाच ॥ श्रुता मे विविधा धर्म्मास्त्वत्प्रसादाद्द्विजोत्तम ॥ भूयश्च श्रोतुमिच्छामि तन्मे कथय सुव्रत ॥६ ॥ कथमेषा महापुण्या नदी सर्वत्र विश्रुता ॥ नर्म्मदा नाम विख्याता तन्मे ब्रूहि महामुने ॥ ७ ॥ मार्कण्डेय उवाच ॥ नर्म्मदा सरितां श्रेष्ठा सर्व-पापप्रणाशिनी ॥ तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥ ८ ॥ नर्म्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् ॥ तदेतद्धि महाराज तत्सर्वं कथयामि ते ॥ ९ ॥ पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ॥ ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्म्मदा ॥ १० ॥ त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ॥ सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्म्मदम् ॥ ११ ॥ कलिङ्गदेशे पश्चार्द्धे पर्वतेऽमरकण्टके ॥ पुण्या च त्रिषु लोकेषु

रमणीया मनोरमा ॥ १२ ॥ सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः ॥ तपस्तप्त्वा महाराज सिद्धिं च परमां गताः ॥ १३ ॥ तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ॥ उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ १४ ॥ जलेश्वरे नरः स्नात्वा पिण्डं दत्त्वा यथाविधि ॥ पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥ १५ ॥ पर्वतस्य समन्तात्तु रुद्रकोटिः प्रतिष्ठिता ॥ स्नात्वा यः कुरुते तत्र गन्धमाल्यानुलेपनैः ॥१६॥ प्रीतस्तस्य भवेच्छर्वो रुद्रकोटिर्न संशयः ॥ पश्चिमे पर्वतस्यान्ते स्वयं देवो महेश्वरः ॥ १७ ॥ तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः॥ पितृकार्य्यं च कुर्वीत विधिवन्नियतेन्द्रियः ॥ १८॥ तिलोदकेन तत्रैव तर्पयेत्पितृदेवताः ॥ आसप्तमं कुलं तस्य स्वर्गे मोदेत पाण्डव ॥१९ ॥ षष्टिवर्षसहस्राणि स्वर्गलोके महीयते ॥ अप्सरोगणसङ्कीर्णे सिद्धचारणसेविते ॥२०॥दिव्यगन्धानुलिप्तश्च दिव्यालङ्कारभूषितः ॥ ततः स्वर्गात् परिभ्रष्टो जायते विपुले कुले ॥ २१ ॥ धनवान्दानशीलश्च धार्म्मिकश्चैव जायते ॥ पुनः स्मरति तत्तीर्थं गमनं तत्र रोचते ॥ २२ ॥कुलानि तारयेत्सप्त रुद्रलोकं स गच्छति ॥ योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥ २३ ॥ विस्तारेण तु राजेन्द्र योजनद्वयमायता ॥ षष्टिस्तीर्थ सहस्राणि षष्टिकोट्यस्तथैव च ॥ २४ ॥ सर्वं तस्य समन्तात्तु तिष्ठत्यमरकण्टके ॥ ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ॥२५॥ सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ॥ परं सर्वसमाचारो यस्तु प्राणान्परित्यजेत् ॥ २६ ॥ तस्य पुण्यफलं राजञ्छृणुष्वावहितो मम ॥ शतं वर्षसहस्राणां स्वर्गे मोदेत पाण्डव ॥ २७ ॥ अप्सरोगणसंकीर्णे सिद्धचारणसेविते ॥ दिव्यगन्धानुलिप्तश्च दिव्यपुष्पोपशोभितः ॥ २८ ॥ क्रीडते देवलोकस्थो दैवतैः सह मोदते ॥ ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्य्यवान् ॥ २९ ॥ गृहं तु लभते वै स नानारत्नविभूषितम् ॥ स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैडूर्य्यभूषितैः ॥ ३० ॥ आलेख्यसहितं दिव्यं दासीदाससमन्वितम् ॥ मत्तमातङ्गशब्दैश्च हयानां हेषितेन च ॥३१॥ क्षुभ्यते तस्य तद्द्वारमिन्द्रस्य भवनं यथा ॥ राजराजेश्वरः श्रीमान् सर्वस्त्रीजनवल्लभः ॥ ३२ ॥ तस्मिन् गृहे उषित्वा तु क्रीडाभोगसमन्विते ॥ जीवेद्वर्षशतं साग्रं सर्वरोगविवर्जितः ॥ ३३ ॥ एवं भोगो भवेत्तस्य यो मृतोऽमरकण्टके ॥ अग्नौ विषजले वापि तथा चैव ह्यनाशके ॥ ३४ ॥ अनिवर्त्तिका गतिस्तस्य पवनस्याम्बरे यथा ॥ पतनं कुरुते यस्तु अमरेशे नराधिप ॥ ३५ ॥ कन्यानां त्रिसहस्राणि एकैक

स्यापि चापरे ॥ तिष्ठन्ति भुवने तस्य प्रेषणं प्रार्थयन्ति च ॥ दिव्यभोगैः सुसंपन्नः क्रीडते कालमक्षयम् ॥ ३६ ॥ पृथिव्यामासमुद्रायामीदृशो नेह जायते ॥ यादृशोऽयं नृपश्रेष्ठ पर्वतेऽमरकण्टके ॥ ३७ ॥ तावत्तीर्थं तु विज्ञेयं पर्वतस्य तु पश्चिमे ॥ ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ ३८ ॥ तत्र पिण्डप्रदानेन सन्ध्योपासनकर्म्मणा ॥ पितरो दश वर्षाणि तर्पितास्तु भवन्ति वै ॥ ३९ ॥ दक्षिणे नर्म्मदाकूले कपिलेति महानदी ॥ सरलार्ज्जुनसंछन्ना नातिदूरे व्यवस्थिता ॥ ४० ॥ सापि पुण्या महाभागा त्रिषु लोकेषु विश्रुता ॥ तत्र कोटिशतं साग्रं तीर्थानां तु युधिष्ठिर ॥ ४१ ॥ पुराणे श्रूयते राजन् सर्वं कोटिगुणं भवेत् ॥ तस्यास्तीरे तु ये वृक्षाः पतिताः कालपर्य्ययात् ॥ ४२ ॥ नर्मदातोयसंस्पृष्टास्तेऽपि यान्ति परां गतिम् ॥ द्वितीया तु महाभागा विशल्यकरणी शुभा ॥ ४३ ॥ तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात् ॥ तत्र देवगणाः सर्वे सकिन्नरमहोरगाः ॥४४॥ यक्षराक्षसगन्धर्वा ऋषयश्च तपोधनाः ॥ सर्वे समागतास्तत्र पर्वतेऽमरकण्टके ॥ ४५ ॥ तैश्च सर्वैः समागम्य मुनिभिश्च तपोधनैः ॥ नर्म्मदामाश्रिता पुण्या विशल्या नाम नामतः ॥ ४६ ॥ उत्पादिता महाभागा सर्वपापप्रणाशिनी ॥ तत्र स्नात्वा नरो राजन्ब्रह्मचारी जितेन्द्रियः ॥४७॥ उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ कपिला च विशल्या च श्रूयते राजसत्तम ॥४८॥ ईश्वरेण पुरा प्रोक्ते लोकानां हितकाम्यया ॥ तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ॥ ४९ ॥ अनाशकं तु यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ॥ सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥ ५० ॥ नर्म्मदायास्तु राजेन्द्र पुराणे यन्मया श्रुतम् ॥ यत्र यत्र नरः स्नात्वा चाश्वमेधफलं लभेत् ॥ ५१॥ ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ॥ सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर ॥५२॥ समं स्नानं च दानं च यथा मे शङ्करोऽब्रवीत् ॥ परित्यज्यति यः प्राणान् पर्वतेऽमरकण्टके॥ ५३॥वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥ नर्मदाया जलं पुण्यं फेनोर्मिभिरलंकृतम् ॥ ५४ ॥ पवित्रं शिरसा वन्द्यं सर्वपापैः प्रमुच्यते ॥ नर्मदा च सदा पुण्या ब्रह्महत्यापहारिणी ॥ ५५ ॥ अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥ एवं रम्या च पुण्या च नर्मदा पाण्डुनन्दन ॥ ५६ ॥ त्रयाणामपि लोकानां पुण्या ह्येषा महानदी ॥ घटेश्वरे महापुण्ये गङ्गाद्वारे तपोवने ॥ ५७ ॥ एतेषु सर्वस्थानेषु द्विजाः स्युः संशितव्रताः ॥ श्रुतं दशगुणं पुण्यं नर्मदोदधिसङ्गमे ॥ ५८ ॥ इति श्रीमात्स्ये महापुराणे

नर्मदामहात्म्ये षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ मार्कण्डेय उवाच ॥ नर्मदा तु नदी श्रेष्ठा पुण्यात्पुण्यतमा हिता ॥ मुनिभिस्तु महाभागैर्विभक्ता मोक्षकांक्षिभिः ॥ १ ॥ यज्ञोपवितमात्राणि प्रविभक्तानि पाण्डव ॥ तेषु स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥२॥ जलेश्वरं परं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ तस्योत्पत्तिं कथयतः शृणु त्व पाण्डुनन्दन ॥ ३ ॥ पुरा मुनिगणाः सर्वे सेन्द्राश्चैव मरुद्गणाः ॥ स्तुवन्ति ते महात्मानं महादेवं महेश्वरम् ॥ स्तुवन्तस्ते तु सम्प्राप्ता यत्र देवो महेश्वरः ॥ ४ ॥ विज्ञापयन्ति देवेशं सेन्द्राश्चैव मरुद्गणाः ॥ भयोद्विग्ना विरूपाक्षं परित्रायस्व नः प्रभो ॥ ५ ॥ भगवानुवाच ॥ स्वागतं तु सुरश्रेष्ठाः किमर्थमिह चागताः ॥ किं दुःखं को नु सन्तापः कुतो वा भयमागतम् ॥ ६ ॥ कथयध्वं महाभागा एतमिच्छामि वेदितुम् ॥ एवमुक्तास्तु रुद्रेण कथयन् संशितव्रताः ॥ ७ ॥ ऋषय ऊचुः ॥ अतिवीर्यो महाघोरो दानवो बलदर्पितः ॥ बाणो नामेति विख्यातो यस्य वै त्रिपुरं पुरम् ॥ ८ ॥ गगने सततं दिव्यं भ्रमते तस्य तेजसा ॥ ततो भीता विरूपाक्ष त्वामेव शरणं गताः ॥ ९ ॥ त्रायस्व महतो दुःखात्त्वं हि नः परमा गतिः॥ एवं प्रसादं देवेश सर्वेषां कर्तुमर्हसि ॥१०॥ येन देवाः सगन्धर्वाः सुखमेधन्ति शंकर ॥ परां निर्वृतिमायान्ति तत्प्रभो कर्तुमर्हसि ॥ ११ ॥ भगवानुवाच ॥ एतत्सर्वं करिष्यामि मा विषादं गमिष्यथ ॥ अचिरेणैव कालेन कुर्यां युष्मत्सुखावहम् ॥ १२ ॥ आश्वास्य स तु तान् सर्वान् नर्मदातटमाश्रितः ॥ चिन्तयामास देवेशस्तद्वधं प्रति मानद ॥ १३ ॥ अथ केन प्रकारेण हन्तव्यं त्रिपुरं मया ॥ परं सञ्चिन्त्य भगवान् नारदं चास्मरत्तदा ॥ स्मरणादेव सम्प्राप्तो नारदः समुपस्थितः ॥१४॥ नारद उवाच ॥ आज्ञापय महादेव किमर्थं च स्मृतो ह्यहम् ॥ किं कार्यं तु मया देव कर्त्तव्यं कथयस्व मे ॥१५॥ भगवानुवाच ॥ गच्छ नारद तत्रैव यत्र तत् त्रिपुरं महत् ॥ बाणस्य दानवेन्द्रस्य शीघ्रं गत्वा च तत्कुरु ॥ १६ ॥ ता भर्तृदेवतास्तत्र स्त्रियश्चाप्सरसां समाः ॥ तासां वै तेजसा विप्र भ्रमते त्रिपुरं दिवि ॥ १७ ॥ तत्र गत्वा तु विप्रेन्द्र मतिमन्यां प्रचोदय ॥ देवस्य वचनं श्रुत्वा मुनिस्त्वरितविक्रमः ॥ १८ ॥ स्त्रीणां हृदयनाशाय प्रविष्टस्तत्पुरं प्रति ॥ शोभते यत्पुरं दिव्यं नानारत्नोपशोभितम् ॥ १९ ॥ शतयोजनविस्तीर्णं ततो द्विगुणमायतम् ॥ ततोऽपश्यद्धि तत्रैव बाणं तु बलदर्पितम् ॥ २० ॥ मणिकुण्डलकेयूरमुकुटेन विराजितम् ॥ हारदोरसुवर्णै

श्च चन्द्रकान्तविभूषितम् ॥ २१ ॥ रशना तस्य रत्नाढ्या बाहू कनकमण्डितौ ॥ चन्द्रकान्तमहावज्रमणिविद्रुमभूषिते ॥ २२ ॥ द्वादशार्क
द्युतिनिभे निविष्टं परमासने ॥ उत्थितो नारदं दृष्ट्वा दानवेंद्रो महाबलः ॥ २३ ॥ बाण उवाच ॥ देवर्षे त्वं स्वयं प्राप्तो ह्यर्घ्यं पाद्यं निवेदये ॥
सोऽभिवाद्य यथान्यायं क्रियतां किं द्विजोत्तम ॥ २४ ॥ चिरात् त्वमागतो विप्र स्थीयतामिदमासनम् ॥ एवं सम्भाषयित्वा तु नारदं ऋषि
सत्तमम् ॥ तस्य भार्या महादेवी ह्यनौपम्या तु नामतः ॥ २५ ॥ अनौपम्योवाच ॥ भगवन् मानुषे लोके केन तुष्यति केशवः ॥ व्रतेन निय
मेनाथ दानेन तपसापि वा ॥ २६ ॥ नारद उवाच ॥ तिलधेनुं च यो दद्याद्ब्राह्मणे वेदपारगे ॥ ससागरवनद्वीपा दत्ता भवति मेदिनी ॥ २७ ॥
सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ मोदते सुचिरं कालमक्षयं कृतशासनम् ॥२८॥ आम्राम्लकपित्थानि बदराणि तथैव च ॥ कदम्ब
चम्पकाशोकपुन्नागविविधद्रुमान् ॥ २९ ॥ अश्वत्थपिप्पलांश्चैव कदलीवटदाडिमान् ॥ पिचुमर्दं मधूकं च उपोष्य स्त्री ददाति या ॥ ३० ॥
स्तनौ कपित्थसदृशावूरू च कदलीसमौ ॥ अश्वत्थे वन्दनीया च पिचुमर्दं सुगन्धिनी ॥ ३१ ॥ चम्पके चम्पकाभा स्यादशोके शोक
वर्जिता ॥ मधूके मधुरं वक्ति वटे च मृदुगात्रिका ॥ ३२ ॥ बदरी सर्वदा स्त्रीणां महासौभाग्यदायिनी ॥ कुक्कुटी कर्कटी चैव द्रव्यषष्ठी न
शस्यते ॥ ३३ ॥ कदम्बमिश्रकनकमञ्जरीपूजनं तथा ॥ अनग्निपक्वमन्नं च पक्वान्नानामभक्षणम् ॥ ३४ ॥ फलानां च परित्यागः
सन्ध्यामौनं तथैव च ॥ प्रथमं क्षेत्रपालस्य पूजा कार्या प्रयत्नतः ॥ ३५ ॥ तस्या भवति वै भर्ता मुखप्रेक्षः सदानघे ॥ अष्टमी च चतुर्थी च
पञ्चमी द्वादशी तथा ॥३६॥ संक्रान्तिर्विषुवच्चैव दिनच्छिद्रमुखं यथा ॥ एतांस्तु दिवसान्दिव्यानुपवासन्ति याः स्त्रियः ॥ तासां तु धर्मयुक्तानां
स्वर्गवासो न संशयः ॥ ३७ ॥ कलिकालुष्यनिर्मुक्ताः सर्वपापविवर्जिताः ॥ उपवासरतां नारीं नोपसर्पति तां यमः ॥३८॥ अनौपम्योवाच ॥
अस्मत्कृतेन पुण्येन पुराजन्मकृतेन वा ॥ भवदागमनं भूतं किंचित्पृच्छाम्यहं व्रतम् ॥ ३९ ॥ अस्ति विन्ध्यावलिर्नाम बलिपत्नी यशस्विनी ॥
श्वश्रूर्ममापि विप्रेन्द्र न तुष्यति कदाचन॥४०॥श्वशुरोपि सर्वकालं दृष्ट्वा चापि न पश्यति॥अस्ति कुम्भीनसी नाम ननान्दा पापकारिणी ॥४१॥
दृष्ट्वा चैवांगुलीभङ्गं सदा कालं करोति च ॥ द्विष्येन तु पथा याति मम सौख्यं कथं वद ॥ ४२ ॥ ऊषरे न प्ररोहन्ति बीजांकुराः कथञ्चन ॥

येन व्रतेन चीर्णेन भवन्ति वशगा मम ॥ तद्व्रतं ब्रूहि विप्रेन्द्र दासभावं व्रजामि ते ॥ ४३ ॥ नारद उवाच ॥ यदेतत्ते मया पूर्वं व्रतमुक्तं शुभानने ॥ अनेन पार्वती देवी चीर्णेन वरवर्णिनि ॥ ४४ ॥ शङ्करस्य शरीरस्था विष्णोर्लक्ष्मीस्तथैव च ॥ सावित्री ब्रह्मणश्चैव वसिष्ठस्याप्यरुन्धती ॥ ४५ ॥ एतेनोपोषितेनेह भर्त्ता स्थास्यति ते वशे ॥ श्वश्रूश्वशुरयोश्चैव सुखबन्धो भविष्यति ॥ ४६ ॥ एवं श्रुत्वा तु सुश्रोणि यथेष्टं कर्त्तुमर्हसि ॥ नारदस्य वचः श्रुत्वा राज्ञी वचनमब्रवीत् ॥ ४७ ॥ प्रसादं कुरु विप्रेन्द्र दानं ग्राह्यं यथेप्सितम् ॥ सुवर्णमणिरत्नानि वस्त्राण्याभरणानि च ॥ ४८ ॥ तव दास्याम्यहं विप्र यच्चान्यदपि दुर्लभम् ॥ प्रगृहाण द्विजश्रेष्ठ प्रीयेतां हरिशङ्करौ ॥४९॥ नारद उवाच ॥ अन्यस्मै दयितां भद्रे क्षीणवृत्तिस्तु यो द्विजः ॥ अहं तु सर्वसम्पन्नो मद्भक्तिः क्रियतामिति ॥५०॥ एवं तासां मनो हृत्वा सर्वासां तु पतिव्रताः ॥ जगाम भरतश्रेष्ठ स्वकीयं स्थानकं पुनः ॥५१॥ ततो ह्यहृष्टहृदया अन्यतो गतमानसाः ॥ पुरे च्छिद्रं समुत्पन्नं बाणस्य तु महात्मनः ॥ ५२ ॥ इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये सप्ताशीत्यधिकशततमोऽध्यायः ॥१८७॥ मार्कण्डेय उवाच ॥ यन्मां पृच्छसि कौन्तेय तन्मे कथयतः शृणु ॥ एतस्मिन्नन्तरे रुद्रो नर्म्मदातटमास्थितः ॥ १ ॥ नाम्ना माहेश्वरं स्थानं त्रिषु लोकेषु विश्रुतम् ॥ तस्मिन्स्थाने महादेवोऽचिन्तयत्त्रिपुरे वधम् ॥२॥ गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा च वासुकिम् ॥ स्थानं कृत्वा तु वैशाखं विष्णुं कृत्वा शरोत्तमम् ॥३॥ शल्ये चाग्निं प्रतिष्ठाप्य मुखे वायुं समर्पयन् ॥ हयांश्च चतुरो वेदान्सर्वदेवमयं रथम् ॥ ४ ॥ अभीषवोऽश्विनौ देवावक्षो वज्रधरः स्वयम् ॥ स तस्याज्ञां समादाय तोरणे धनदः स्थितः ॥ ५ ॥ यमस्तु दक्षिणे हस्ते वामे कालस्तु दारुणः ॥ चक्रे त्वमरकोटयस्तु गन्धर्वा लोकविश्रुताः ॥ ६ ॥ प्रजापती रथश्रेष्ठे ब्रह्मा चैव तु सारथिः ॥ एवं कृत्वा तु देवेशः सर्वदेवमयं रथम् ॥ ७ ॥ सोऽतिष्ठत्स्थाणुभूतस्तु सहस्रपरिवत्सरान् ॥ यदा त्रीणि समेतानि अन्तरिक्षे स्थितानि वै ॥ ८ ॥ त्रिपर्वाणि त्रिशल्येन तदा तानि व्यभेदयत् ॥ शरः प्रचोदितस्तेन रुद्रेण त्रिपुरं प्रति ॥ ९ ॥ भ्रष्टतेजाः स्त्रियो जाता बलं तासां व्यशीर्यत ॥ उत्पाताश्च पुरे तस्मिन्प्रादुर्भूताः सहस्रशः ॥ १० ॥ त्रिपुरस्य विनाशाय कालरूपाभवंस्तदा ॥ अट्टहासं प्रमुञ्चन्ति हयाः काष्ठमयास्तदा ॥ ११ ॥ निमेषोन्मेषणं चैव कुर्वन्ति चित्ररूपिणः ॥ स्वप्ने पश्यन्ति चात्मानं रक्ताम्बर

विभूषितम् ॥ १२ ॥ स्वप्ने तु सर्वे पश्यन्ति विपरीतानि यानि तु ॥ एतान्पश्यन्ति उत्पातांस्तत्र स्थाने तु ये जनाः ॥ १३ ॥ तेषां बलं च बुद्धिश्च हरकोपेन नाशितं ॥ ततः सांवर्त्तको वायुर्युगान्तप्रतिमो महान् ॥ १४ ॥ समीरितोऽनलस्तेन उत्तमाङ्गेन धावति ॥ ज्वलन्ति पादपास्तत्र पतन्ति शिखराणि च ॥ १५ ॥ सर्वतो व्याकुलीभूतं हाहाकारमचेतनम् ॥ भग्नोद्यानानि सर्वाणि क्षिप्रं तत्प्रत्यभज्यत ॥ १६ ॥ तेनैव पीडितं सर्वं ज्वलितं त्रिशिखैः शरैः ॥ द्रुमाश्चारामषण्डानि गृहाणि विविधानि च ॥ १७ ॥ दशदिक्षु प्रवृत्तोऽयं समृद्धो हव्यवाहनः ॥ मनःशिलानां पुञ्जानि दिशो दश विभागशः ॥ १८ ॥ शिखाशतैरनेकैस्तु प्रजज्वाल हुताशनः ॥ सर्वं किंशुकवर्णाभं ज्वलितं दृश्यते पुरम् ॥ १९ ॥ गृहाद्गृहान्तरं नैव गन्तु धूमेन शक्यते ॥ हरकोपानलैर्दग्धं क्रन्दमानं सुदुःखितम् ॥ २० ॥ प्रदीप्तं सर्वतो दिक्षु दह्यते त्रिपुरं पुरम् ॥ प्रासादशिखराग्राणि व्यशीर्यन्त सहस्रशः ॥ २१ ॥ नानामणिविचित्राणि विमानान्यप्यनेकधा ॥ गृहाणि चैव रम्याणि दह्यन्ते दीप्तवह्निना ॥ २२ ॥ धावन्ति द्रुमखण्डेषु वलभीषु तथा जनाः ॥ देवागारेषु सर्वेषु प्रज्वलन्तः प्रधाविताः ॥ २३ ॥ क्रन्दन्ति चानलस्पृष्टा रुदन्ति विविधैः स्वरैः ॥ दह्यन्ते दानवास्तत्र शतशोऽथ सहस्रशः ॥ २४ ॥ हंसकारण्डवाकीर्णा नलिन्यः सहपङ्कजाः ॥ दृश्यन्तेऽनलदग्धानि पुरोद्यानानि दीर्घिकाः ॥ २५ ॥ अम्लानपङ्कजच्छन्ना विस्तीर्णा योजनायताः ॥ गिरिकूटनिभास्तत्र प्रासादा रत्नभूषिताः ॥ २६ ॥ पतन्त्यनलनिर्दग्धा निस्तोया जलदा इव ॥ वरस्त्रीबालवृद्धेषु गोषु पक्षिषु वाजिषु ॥ २७ ॥ निर्दयो व्यदहद्वह्निर्हरक्रोधेन प्रेरितः ॥ सहस्रशः प्रबुद्धाश्च सुप्ताश्च बहवो जनाः ॥ २८ ॥ पुत्रमालिङ्ग्य ते गाढं दह्यन्ते त्रिपुराग्निना ॥ अथ तस्मिन्पुरे दीप्ते स्त्रियश्चाप्सरसोपमाः ॥ २९ ॥ अग्निज्वालाहतास्तत्र ह्यपतन्धरणीतले ॥ काचिच्छ्यामा विशालाक्षी मुक्तावलिविभूषिता ॥ ३० ॥ धूमेनाकुलिता सा तु पतिता धरणीतले ॥ काचित्कनकवर्णाभा इन्द्रनीलविभूषिता ॥ ३१ ॥ भर्त्तारं पतितं दृष्ट्वा पतिता तस्य चोपरि ॥ काचिदादित्यसङ्काशा प्रसुप्ता च गृहे स्थिता ॥ ३२ ॥ अग्निज्वालाहता सा तु पतिता गतचेतना ॥ उत्थितो दानवस्तत्र खड्गहस्तो महाबलः ॥ ३३ ॥ वैश्वानरहतः सोऽपि पतितो धरणीतले ॥ मेघवर्णापरा नारी हारकेयूरभूषिता ॥ ३४ ॥ श्वेतवस्त्रपरीधाना बालं स्तन्यं न्यधापयत् ॥ दह्यन्तं बालकं दृष्ट्वा रुदते

मेघशब्दवत्॥३५॥ एवं स तु दहन्नग्निर्हरकोपेन प्रेरितः ॥ काचिच्चन्द्रप्रभा सौम्या वज्रवैडूर्यभूषिता ॥३६॥सुतमालिङ्ग्य वेपन्ती दग्धा पतति भूतले ॥ काचित् कुन्देन्दुवर्णाभा या शयाना गृहे स्थिता॥३७॥गृहे प्रज्वलिते सा तु प्रतिबुद्धा शिखार्दिता॥ पश्यन्ती ज्वलितं सर्वं हा सुतो मे कथं गतः॥३८॥ सुतं सन्दग्धमालिङ्ग्य पतिता धरणीतले॥आदित्योदयवर्णाभा लक्ष्मीवदनशोभना ॥३९॥ त्वरिता दह्यमाना सा पतिता धरणीतले ॥ काचित् सुवर्णवर्णाभा नीलरत्नैर्विभूषिता ॥४०॥ धूमेनाकुलिता सा तु प्रसुप्ता धरणीतले ॥ अन्या गृहीतहस्ता तु सखि दह्यति बालिका॥४१॥अनेकदिव्यरत्नाढ्या दृष्ट्वा दहनमोहिता ॥ शिरसि ह्यञ्जलिं कृत्वा विज्ञापयति पावकम् ॥ ४२ ॥ भगवन् यदि वैरं ते पुरुषेष्वप कारिषु ॥ स्त्रियः किमपराध्यन्ते गृहपञ्जरकोकिलाः॥४३॥पाप निर्दय निर्लज्ज कस्ते कोपः स्त्रियः प्रति ॥ न दाक्षिण्यं न ते लज्जा न सत्यं शौर्यवर्जित ॥४४ ॥ अनेन ह्युपसर्गेण तूपालम्भं शिखिन्यदात् ॥ किं त्वया न श्रुतं लोके ह्यवध्याः शत्रुयोषितः॥४५॥ किन्तु तुभ्यं गुणा ह्येते दहनोत्सादनं प्रति ॥ न कारुण्यं दया वापि दाक्षिण्यं न स्त्रियः प्रति ॥ ४६ ॥ दयां कुर्वन्ति म्लेच्छापि दहन्तीं वीक्ष्य योषितम् ॥ म्लेच्छानामपि कष्टोऽसि दुर्निवारो ह्यचेतनः ॥ ४७ ॥ एते चैव गुणास्तुभ्यं दहनोत्सादनं प्रति ॥ आसामपि दुराचार स्त्रीणां किं ते निपा तने ॥ ४८ ॥ दुष्ट निर्घृण निर्लज्ज हुताशिन् मन्दभाग्यक ॥ निराशत्वं दुरावास बलाद्दहसि निर्दय ॥ ४९ ॥ एवं विलपमानास्ता जल्पन्त्य श्च बह्वन्यपि ॥ अन्याः क्रोशन्ति संक्रुद्धा बालशोकेन मोहिताः ॥ ५० ॥ दहते निर्दयो वह्निः सक्रुद्धः पूर्वशत्रुवत् ॥ पुष्करिण्यां जलं दग्धं कूपेष्वपि तथैव च ॥ ५१ ॥ अस्मान् सन्दह्य म्लेच्छ त्वं कां गतिं प्रापयिष्यसि ॥ एवं प्रलपतां तासां वह्निर्वचनमब्रवीत् ॥ ५२ ॥ अग्निरुवाच ॥ स्ववशेनैव युष्माकं विनाशं तु करोम्यहम् ॥ अहमादेशकर्ता वै नाहं कर्तास्म्यनुग्रहम् ॥ ५३ ॥ रुद्रक्रोधसमाविष्टो विचि श्रामि यथेच्छया॥ ततो बाणो महातेजास्त्रिपुरं वीक्ष्य दीपितम् ॥ ५४ ॥ सिंहासनस्थः प्रोवाच ह्यहं देवैर्विनाशितः ॥ अल्पसत्त्वैर्दुराचारैरीश्व रस्य निवेदितम् ॥ ५५ ॥ अपरीक्ष्य त्वहं दग्धः शङ्करेण महात्मना ॥ नान्यः शक्तस्तु मां हन्तुं वर्जयित्वा त्रिलोचनम् ॥ ५६ ॥ उत्थितः शिरसा कृत्वा लिङ्गं त्रिभुवनेश्वरम् ॥ निर्गतः स पुरद्वारात् परित्यज्य सुहृत्सुतान् ॥ ५७ ॥ रत्नानि यान्यनर्घाणि स्त्रियो नानाविधास्तथा ॥

गृहीत्वा शिरसा लिङ्गं गच्छन् गगनमण्डलम् ॥ ५८ ॥ स्तुवंश्च देवदेवेशं त्रिलोकाधिपतिं शिवम् ॥ त्यक्ता पुरी मया देव यदि वध्योऽस्मि शङ्कर ॥५९॥ त्वत्प्रसादान्महादेव मा मे लिङ्गं विनश्यतु ॥ अर्चितं हि मया देव भक्त्या परमया सदा ॥ ६०॥ त्वत्कोपाद्यदि वध्योऽहं तदिदं मा विनश्यतु ॥ श्लाघ्यमेतन्महादेव त्वत्कोपाद्दहनं मम ॥ ६१ ॥ प्रतिजन्म महादेव त्वत्पादनिरतो ह्यहम् ॥ तोटकच्छन्दसा देवं स्तोमि त्वां परमेश्वर ॥६२॥ शिव शङ्कर शर्व हराय नमो भव भीम महेश्वर शर्व नमः ॥ कुसुमायुधदेहविनाशकर त्रिपुरान्तक अन्धकशूलधर ॥ ६३ ॥ प्रमदाप्रिय कान्त विभक्त नमः ससुरासुरसिद्धगणैर्नमित ॥ हयवानरसिद्धगजेन्द्रमुखादतिभास्वरदीर्घविशालमुख ॥ ६४ ॥ उपलब्धुमशक्यतरैरसुरैः प्रथितोऽस्मि च बाहुशतैर्बहुभिः ॥ प्रणतोऽस्मि भवं भवभक्तिरतश्चलचन्द्रकलाकुल देव नमः ॥६५॥ न च पुत्रकलत्रहयादि धनं मम तु त्वदनुस्मरणं शरणम् ॥ व्यथितोऽस्मि तु बाहुशतैर्बहुभिर्गमिता च महानरकस्य गतिः॥ ६६ ॥ न निवर्तति जन्म न पापमतिः शुचिकर्म निबद्धमपि त्यजति ॥ अनुकम्पति विभ्रमति त्रसति मम चैव कुकर्म निवारयति॥६७॥ यः पठेत् तोटकं दिव्यं प्रयतः शुचिमानसः ॥ बाणस्येव यथा रुद्रस्तस्यापि वरदो भवेत् ॥ ६८ ॥ इमं स्तवं महादिव्यं श्रुत्वा देवो महेश्वरः ॥ प्रसन्नस्तु तदा तस्य स्वयं देवो महेश्वरः ॥६९ ॥ महेश्वर उवाच ॥ न भेतव्यं त्वया वत्स सौवर्णे तिष्ठ दानव ॥ पुत्रपौत्रसुहृद्बन्धुभार्याभृत्यजनैः सह ॥७० ॥ अद्यप्रभृति बाण त्वमवध्यस्त्रिदशैरपि ॥ भूयस्तस्य वरो दत्तो देवदेवेन पाण्डव ॥ ७१ ॥ अक्षयश्चाव्ययो लोके विचरस्वाकुतोभयः ॥ ततो निवारयामास रुद्रः सप्तशिखं तदा ॥ ७२ ॥ तृतीयं रक्षितं तस्य पुरं तेन महात्मना ॥ भ्रमत्तु गगने दिव्यं रुद्रतेजःप्रभावतः ॥ ७३ ॥ एवं तु त्रिपुरं दग्धं शङ्करेण महात्मना ॥ ज्वालामालाप्रदीप्तं तत्पतितं धरणीतले ॥ ७४ ॥ एकं निपतितं तत्र श्रीशैले त्रिपुरान्तके ॥ द्वितीयं पतितं तस्मिन्पर्वतेऽमरकण्टके ॥ ७५ ॥ दग्धेषु तेषु राजेन्द्र रुद्रकोटिः प्रतिष्ठिता ॥ ज्वलत्तद्पतत्तत्र तेन ज्वालेश्वरः स्मृतः ॥७६॥ ऊर्ध्वेन प्रस्थितास्तस्य दिव्य ज्वाला दिवं गताः ॥ हाहाकारस्तदा जातो देवासुरकृतो महान् ॥ ७७ ॥ शरमस्तम्भयद्रुद्रो माहेश्वरपुरोत्तमे ॥ एवं वृत्तं तदा तस्मिन्पर्वतेऽमरकण्टके ॥ ७८ ॥ चतुर्दशाख्यं भुवनं स भुक्त्वा पाण्डुनन्दन ॥ वर्षकोटिसहस्रं तु त्रिंशत्कोट्यस्तथापराः ॥ ७९ ॥ ततो महीतलं प्राप्य

राजा भवति धार्मिकः ॥ पृथिवीमेकच्छत्रेण भुङ्क्ते स तु न संशयः ॥ ८० ॥ एवं पुण्यो महाराज पर्वतोऽमरकण्टकः ॥ चन्द्रसूर्योपरागे तु गच्छेद्योऽमरकण्टकम् ॥ ८१ ॥ अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ स्वर्गलोकमवाप्नोति दृष्ट्वा तत्र महेश्वरम् ॥ ८२ ॥ ब्रह्महत्या गमिष्यन्ति राहुग्रस्ते दिवाकरे ॥ तदेवं निखिलं पुण्यं पर्वतेऽमरकण्टके ॥ ८३ ॥ मनसापि स्मरेद्यस्तं गिरिं त्वमरकण्टकम् ॥ चान्द्रायणशतं साग्रं लभते नात्र संशयः ॥ ८४ ॥ त्रयाणामपि लोकानां विख्यातोऽमरकण्टकः ॥ एष पुण्यो गिरिश्रेष्ठः सिद्धगन्धर्वसेवितः ॥ ८५ ॥ नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥ मृगव्याघ्रसहस्रैस्तु सेव्यमानो महागिरिः ॥८६॥ यत्र सन्निहितो देवो देव्या सह महेश्वरः ॥ ब्रह्मा विष्णुस्तथा चेन्द्रो विद्याधरगणैः सह ॥ ८७ ॥ ऋषिभिः किन्नरैर्यक्षैर्नित्यमेव निषेवितः ॥ वासुकिः सहितस्तत्र क्रीडते यज्ञगोत्तमे ॥ ८८ ॥ प्रदक्षिणं यः कुर्यात्पर्वतेऽमरकण्टके ॥ पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ८९ ॥ तत्र ज्वालेश्वरं नाम तीर्थं सिद्धनिषेवितम् ॥ तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ९० ॥ ज्वालेश्वरे महाराज यस्तु प्राणान्परित्यजेत् ॥ चन्द्रसूर्योपरागेषु तस्यापि शृणु यत्फलम् ॥ ९१ ॥ सर्वकर्मविनिर्मुक्तो ज्ञानविज्ञानसंयुतः ॥ रुद्रलोकमवाप्नोति यावदाभूतसंप्लवम् ॥ ९२ ॥ अमरेश्वरदेवस्य पर्वतस्य उभे तटे ॥ तत्र ता ऋषिकोट्यस्तु तपस्तप्यन्ति सुव्रत ॥ ९३ ॥ समन्ताद्योजनक्षेत्रो गिरिश्चामरकण्टकः ॥ ९४ ॥ अकामो वा सकामो वा नर्मदायां शुभे जले ॥ स्नात्वा तैर्मुच्यते पापै रुद्रलोकं स गच्छति ॥ ९५ ॥ इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ सूत उवाच ॥ पृच्छन्ति ते महात्मानो मार्कण्डेयं महामुनिम् ॥ युधिष्ठिरपुरोगास्ते ऋषयश्च तपोधनाः ॥ १ ॥ आख्याहि भगवंस्तथ्यं कावेरीसङ्गमो महान् ॥ लोकानां च हितार्थाय अस्माकं च विवृद्धये ॥ २ ॥ सदा पापरता ये च नरा दुष्कृतकारिणः ॥ मुच्यन्ते सर्वपापेभ्यो गच्छन्ति परमं पदम् ॥ एतदिच्छाम विज्ञातुं भगवन्वक्तुमर्हसि ॥ ३॥ मार्कण्डेय उवाच ॥ शृण्वन्त्ववहिताः सर्वे युधिष्ठिरपुरोगमाः ॥ अस्ति वीरो महायज्ञः कुबेरः सत्यविक्रमः ॥ ४ ॥ इदं तीर्थमनुप्राप्य राजा यक्षाधिपोऽभवत् ॥ सिद्धिं प्राप्तो महाराज तन्मे निगदतः शृणु ॥ ५ ॥ कावेरी नर्मदा यत्र सङ्गमो लोकविश्रुतः ॥ तत्र स्नात्वा शुचिर्भूत्वा कुबेरः सत्यविक्रमः ॥ ६ ॥ तपोऽ

तप्यत यक्षेन्द्रो दिव्यं वर्षशतं महत् ॥ तस्य तुष्टो महादेवः प्रदातुं वरमुत्तमम् ॥ ७ ॥ भो भो यक्ष महासत्त्व वरं ब्रूहि यथेप्सितम् ॥ ब्रूहि कार्यं यथेष्टं तु यद्वा मनसि वर्त्तते ॥ ८ ॥ कुबेर उवाच ॥ यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥ अद्यप्रभृति सर्वेषां यक्षाणामधिपो भवे ॥ ९ ॥ कुबेरस्य वचः श्रुत्वा परितुष्टो महेश्वरः ॥ एवमस्तु ततो देवस्तत्रैवान्तरधीयत ॥ १० ॥ सोऽपि लब्धवरो यक्षः शीघ्रं यक्ष कुलं गतः ॥ पूजितः स तु यक्षैश्च ह्यभिषिक्तस्तु पार्थिव ॥ ११ ॥ कावेरीसङ्गमं तत्र सर्वपापप्रणाशनम् ॥ ये नरा नाभिजानन्ति वंचितास्ते न संशयः ॥ १२ ॥ तस्मात्सर्वप्रयत्नेन तत्र स्नायीत मानवः॥ कावेरी च महापुण्या नर्मदा च महानदी ॥ १३ ॥ तत्र स्नात्वा तु राजेंद्र ह्यर्चये वृषभध्वजम्॥ अश्वमेधफलं प्राप्य रुद्रलोके महीयते॥ १४॥ अग्निप्रवेशं यः कुर्याद्यश्च कुर्यादनाशकम्॥ अनिवर्त्या गतिस्तस्य यथा मे शंकरोऽब्रवीत् ॥ १५ ॥ सेव्यमानो वरस्त्रीभिः क्रीडते दिवि रुद्रवत् ॥ षष्टिवर्षसहस्राणि षष्टिकोट्यस्तथापराः ॥ १६ ॥ मोदते रुद्रलोकस्थो यत्र तत्रैव गच्छति ॥ पुण्यक्षयात्परिभ्रष्टो राजा भवति धार्मिकः ॥ १७ ॥ भोगवान्दानशीलश्च महाकुलसमुद्भवः ॥ तत्र पीत्वा जलं सम्यक् चान्द्रायणफलं लभेत् ॥ १८ ॥ स्वर्गं गच्छन्ति ते मर्त्या ये पिबन्ति शुभं जलम् ॥ गङ्गायमुनयोर्मध्ये यत्फलं प्राप्नुयान्नरः ॥ कावेरीसङ्गमे स्नात्वा तत्फलं तस्य जायते ॥ १९ ॥ एवमादि तु राजेंद्र कावेरीसंगमे महत् ॥ पुण्यं महत्फलं तत्र सर्वपापप्रणाशनम् ॥ २० ॥ इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ मार्कण्डेय उवाच ॥ नार्मदे चोत्तरे कूले तीर्थं योजन विस्तृतम् ॥ मन्त्रेश्वरेति विख्यातं सर्वपापहरं परम् ॥ १ ॥ तत्र स्नात्वा नरो राजन्दैवतैः सह मोदते ॥ पञ्चवर्षसहस्राणि क्रीडते काम रूपधृक् ॥ २ ॥ गर्जनं च ततो गच्छेद्यत्र मेघचयोत्थितः ॥ इन्द्रजिन्नाम सम्प्राप्तस्तस्य तीर्थप्रभावतः ॥३॥ मेघनादं ततो गच्छेद्यत्र मेघा नुगर्जितम् ॥ मेघनादो गणस्तत्र परमां गणतां गतः ॥४॥ ततो गच्छेत्तु राजेन्द्र तीर्थमाम्रातकेश्वरम् ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ५ ॥ नर्म्मदोत्तरतीरे तु तीर्थं तु विश्रुतं भवेत् ॥ तस्मिंस्तीर्थे नरः स्नात्वा तर्पयेत्पितृदेवताः ॥६॥ सर्वान्कामानवाप्नोति मनसा ये विचिन्तिताः ॥ ततो गच्छेत्तु राजेन्द्र ब्रह्मावर्त्तमिति स्मृतम् ॥ ७॥ तत्र सन्निहितो ब्रह्मा नित्यमेव युधिष्ठिर ॥ तत्र स्नात्वा तु राजेन्द्र ब्रह्मलोके

महीयते ॥ ८ ॥ ततोऽगारेश्वरं गच्छेन्नियतो नियताशनः ॥ सर्वपापविनिर्म्मुक्तो रुद्रलोकं स गच्छति ॥ ९ ॥ ततो गच्छेच्च राजेन्द्र कपिला तीर्थमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्कपिलादानमाप्नुयात् ॥ १० ॥ गच्छेत्करजतीर्थं तु देवर्षिगणसेवितम् ॥ तत्र स्नात्वा नरो राजन् गोलोकं समवाप्नुयात् ॥ ११ ॥ ततो गच्छेत्तु राजेन्द्र कुण्डलेश्वरमुत्तमम् ॥ तत्र सन्निहितो रुद्रस्तिष्ठते ह्युमया सह ॥ १२॥ तत्र स्नात्वा तु राजेन्द्र ह्यवध्यस्त्रिदशैरपि ॥ पिप्पलेशं ततो गच्छेत्सर्वपापप्रणाशनम् ॥ १३ ॥ तत्र स्नात्वा तु राजेन्द्र रुद्रलोके महीयते ॥ ततो गच्छेत्तु राजेन्द्र विमलेश्वरमुत्तमम् ॥ १४ ॥ तत्र देवशिला रम्या चेश्वरेण विनिर्म्मिता ॥ तत्र प्राणपरित्यागाद्रुद्रलोकमवाप्नुयात् ॥ १५ ॥ ततः पुष्करिणीं गच्छेत्तत्र स्नानं समाचरेत् ॥ स्नातमात्रो नरस्तत्र ह्यिन्द्रस्यार्द्धासनं लभेत् ॥ १६ ॥ नर्म्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ॥ तारयेत् सर्वभूतानि स्थावराणि चराणि च ॥ १७ ॥ सर्वदेवाधिदेवेन त्वीश्वरेण महात्मना ॥ कथिता ऋषिसङ्घेभ्यो ह्यस्माकं च विशेषतः ॥१८॥ मुनिभिः संस्तुता ह्येषा नर्म्मदा प्रवरा नदी ॥ रुद्रदेहाद्विनिष्क्रान्ता लोकानां हितकाम्यया ॥ १९ ॥ सर्वपापहरा नित्यं सर्वदेवनमस्कृता ॥ संस्तुता देवगन्धर्वैरप्सरोभिस्तथैव च ॥ २० ॥ नमः पुण्यजले ह्याद्ये नमः सागरगामिनि ॥ नमस्ते पापशमनि नमो देवि वरानने ॥ २१ ॥ नमोऽस्तु ते ऋषिगणसिद्धसेविते नमोऽस्तु ते शङ्करदेहनिःसृते ॥ नमोऽस्तु ते धर्मभृतां वरप्रदे नमोऽस्तु ते सर्वपवित्रपावने॥ २२ ॥ यास्त्विदं पठते स्तोत्रं नित्यं श्रद्धासमन्वितः ॥ ब्राह्मणो वेदमाप्नोति क्षत्रियो विजयी भवेत्॥२३॥वैश्यस्तु लभते लाभं शूद्रश्चैव शुभां गतिम्॥ अर्थार्थी लभते ह्यर्थं स्मरणादेव नित्यशः ॥२४॥ नर्म्मदां सेवते नित्यं स्वयं देवो महेश्वरः ॥ तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥२५ ॥ इति श्रीमात्स्ये महापुराणे नर्म्मदामाहात्म्ये नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ मार्कण्डेय उवाच ॥ तदाप्रभृति ब्रह्माद्या ऋषयश्च तपोधनाः ॥ सेवन्ते नर्म्मदां राजन् रागक्रोधविवर्जिताः ॥ १ ॥ युधिष्ठिर उवाच ॥ कस्मिन्निपातितं शूलं देवस्य तु महीतले ॥ तत्र पुण्यं समाख्याहि यथावन्मुनिसत्तम ॥ २ ॥ मार्कण्डेय उवाच ॥ शूलभेदमिति ख्यातं तीर्थं पुण्यतमं महत् ॥ तत्र स्नात्वार्चयेद्देवं गोसहस्रफलं लभेत् ॥३॥त्रिरात्रं कारयेद्यस्तु तस्मिंस्तीर्थे नराधिप ॥ अर्चयित्वा महादेवं पुनर्जन्म न विद्यते॥४॥ भीमेश्वरं ततोऽगच्छेन्नारदेश्वरमुत्तमम्॥

आदित्येशं महापुण्यं तथा घृतमधुस्रवम् ॥ ५ ॥ नन्दिकेशं परिष्वज्य पर्य्याप्तं जन्मनः फलम् ॥ वरुणेशं ततः पश्येत्स्वतन्त्रेश्वरमेव च ॥ सर्वतीर्थफलं तस्य पंचायतनदर्शनात् ॥ ६ ॥ ततो गच्छेत्तु राजेन्द्र युद्धं यत्र सुसाधितम् ॥ कोटितीर्थं तु विख्यातमसुरा यत्र मोहिताः ॥७॥ यत्रैव निहता राजन्दानवा बलदर्पिताः ॥ तेषां शिरांस्यगृह्णन्त सर्वे देवाः समागताः ॥ ८ ॥ तैस्तु संस्थापितो देवः शूलपाणिर्वृषध्वजः ॥ कोटिर्विनिहता तत्र तेन कोटीश्वरः स्मृतः ॥ ९ ॥ दर्शनात्तस्य तीर्थस्य सदेहः स्वर्गमारुहेत् ॥ यदा त्विन्द्रेण क्षुद्रत्वाद्वज्रं कीलेन यन्त्रितम् ॥ १० ॥ तदाप्रभृति लोकानां स्वर्गमार्गो निवारितः ॥ सघृतं श्रीफलं जग्ध्वा कृत्वा चैव प्रदक्षिणम् ॥ ११ ॥ पार्वतं सहदीपं तु शिरसा चैव धारयेत् ॥ सर्वकामसुसम्पन्नो राजा भवति पाण्डव ॥ १२ ॥ मृतो रुद्रत्वमाप्नोति ततोऽसौ जायते पुनः ॥ स्वर्गादेत्य भवेद्राजा राज्यं कृत्वा दिवं व्रजेत् ॥ १३ ॥ बहुनेत्रं ततः पश्येत् त्रयोदश्यां तु मानवः ॥ स्नातमात्रो नरस्तत्र सर्वयज्ञफलं लभेत् ॥ १४ ॥ ततो गच्छेत्तु राजेन्द्र तीर्थं परमशोभनम् ॥ नराणां पापनाशाय ह्यगस्त्येश्वरमुत्तमम् ॥ १५ ॥ तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ कार्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशी ॥ १६ ॥ घृतेन स्नापयेद्देवं समाधिस्थो जितेन्द्रियः ॥ एकविंशकुलोपेतो न च्यवेदैश्वरात्पदात् ॥ १७ ॥ धेनुमुपानहच्छत्रे दद्याच्च घृतकम्बलम् ॥ भोजनं चैव विप्राणां सर्वं कोटिगुणं भवेत् ॥ १८ ॥ ततो गच्छेच्च राजेन्द्र बलाकेश्वरमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्सिंहासनपतिर्भवेत् ॥ १९ ॥ नर्म्मदादक्षिणे कूले तीर्थं शक्रस्य विश्रुतम् ॥ उपोष्य रजनीमेकां स्नानं तत्र समाचरेत् ॥ २० ॥ स्नानं कृत्वा यथान्यायमर्च्चयेच्च जनार्दनम् ॥ गोसहस्रफलं तस्य विष्णुलोकं स गच्छति ॥ २१ ॥ ऋषितीर्थं ततो गच्छेत् सर्वपापहरं नृणाम् ॥ स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ २२ ॥ देवतीर्थं ततो गच्छेद्ब्रह्मणा निर्मितं पुरा ॥ तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ २३ ॥ अमरकण्टकं गच्छेदमरैः स्थापितं पुरा ॥ स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥ २४ ॥ ततो गच्छेच्च राजेन्द्र रावणेश्वरमुत्तमम् ॥ तत्पञ्चायतनं दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ २५ ॥ ऋणतीर्थं ततो गच्छेदृणेभ्यो मुच्यते ध्रुवम् ॥ वटेश्वरं ततो दृष्ट्वा पर्याप्तं जन्मनः फलम् ॥ २६ ॥ भीमेश्वरं ततो गच्छेत्सर्वव्याधिविनाशनम् ॥ स्नानमात्रो नरो राजन्सर्वदुःखैः प्रमुच्यते ॥ २७ ॥ ततो गच्छेत्तु राजेन्द्र

तुरासङ्गमनुत्तमम् ॥ तत्र स्नात्वा महादेवमर्चयन्सिद्धिमाप्नुयात्॥२८॥ सोमतीर्थं ततो गच्छेत्पश्येच्चन्द्रमनुत्तमम् ॥ तत्र स्नात्वा नरो राजन् भक्त्या परमया युतः ॥२९॥ तत्क्षणाद्दिव्यदेहस्थः शिववन्मोदते चिरम् ॥ षष्टिवर्षसहस्राणि रुद्रलोके महीयते ॥३० ॥ ततो गच्छेत्तु राजेन्द्र पिङ्गलेश्वरमुत्तमम् ॥ अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥३१॥ तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति ॥ यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ॥३२॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ यस्तु प्राणपरित्यागं कुर्यात्तत्र नराधिप॥३३॥अक्षयं मोदते कालं यावच्चन्द्र दिवाकरौ ॥ नर्म्मदातटमाश्रित्य तिष्ठेयुर्यत्र मानवाः ॥३४॥ते मृताः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ सुरेश्वरं ततो गच्छेन्नाम्ना कर्को टकेश्वरम् ॥३५॥ गङ्गावतरते तत्र दिने पुण्ये न संशयः ॥ नन्दितीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥३६॥तुष्यते तस्य नन्दीशः सोम लोके महीयते ॥ ततो दीपेश्वरं गच्छेद्व्यासतीर्थं तपोवनम् ॥३७॥ निवर्त्तिता पुरा तत्र व्यासभीता महानदी ॥ हुङ्कारिता तु व्यासेन दक्षिणेन ततो गता॥३८॥ प्रदक्षिणं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ॥३९॥व्यासस्तस्य भवेत्प्रीतः प्राप्नुया दीप्सितं फलम् ॥ सूत्रेण वेष्टयित्वा तु दीपो देयः सवेदिकः ॥ ४० ॥ क्रीडन्ति ह्यक्षयं कालं तथा रुद्रस्तथैव च ॥ ततो गच्छेच्च राजेन्द्र ऐरण्डीतीर्थमुत्तमम् ॥४१॥सङ्गमे तु नरः स्नात्वा मुच्यते सर्वपातकैः ॥ ऐरण्डी त्रिषु लोकेषु विख्याता पापनाशिनी ॥४२ ॥ अथवाश्वयुजे मासि शुक्लपक्षे तु चाष्टमी ॥ शुचिर्भूत्वा नरः स्नात्वा सोपवासपरायणः ॥४३॥ ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता ॥ मृत्तिकां शिरसि स्थाप्य ह्यवगाह्य च वै जलम् ॥ ४४ ॥ नर्म्मदोदकसंमिश्रं मुच्यते सर्वकिल्बिषैः ॥ प्रदक्षिणं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ४५ ॥ प्रद क्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ ततः सुवर्णसलिले स्नात्वा दत्त्वा तु कांचनम् ॥ ४६ ॥ कांचनेन विमानेन रुद्रलोके महीयते॥ ततः स्वर्गाच्च्युतः कालाद्राजा भवति वीर्यवान् ॥ ४७ ॥ ततो गच्छेच्च राजेन्द्र ह्यिक्षुनद्यास्तु सङ्गमम् ॥ त्रैलोक्यविश्रुतं दिव्यं तत्र सन्निहितः शिवः ॥ ४८॥ तत्र स्नात्वा नरो राजन्गाणपत्यमवाप्नुयात् ॥ स्कन्दतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् ॥४९ ॥ तत्तीर्थे त्रिविधं पापं स्नान मात्राद्व्यपोहति ॥ लिङ्गसारं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ५० ॥ गोसहस्रफलं तस्य रुद्रलोके महीयते॥ भङ्गतीर्थं ततो गच्छेत्सर्व

पापप्रणाशनम्॥५१॥तत्र गत्वा तु राजेन्द्र स्नानं तत्र समाचरेत्॥ सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः॥५२॥वटेश्वरं ततो गच्छेत्सर्वतीर्थ मनुत्तमम् ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ५३ ॥ सङ्गमेशं ततो गच्छेत्सर्वदेवनमस्कृतम् ॥ स्नानमात्रान्नरस्तत्र चेन्द्रत्वं लभते ध्रुवम् ॥ ५४ ॥ कोटितीर्थं ततो गच्छेत्सर्वपापहरं परम् ॥ तत्र स्नात्वा नरो राज्यं लभते नात्र संशयः ॥ ५५ ॥ तत्र तीर्थे समासाद्य दत्त्वा दानं तु यो नरः ॥ तस्य तीर्थप्रभावेण सर्वं कोटिगुणं भवेत् ॥ ५६ ॥ अथ नारी भवेत्काचित्तत्र स्नानं समाचरेत् ॥ गौरीतुल्या भवेत्सापि त्विन्द्रपत्नी न संशयः ॥५७॥ अङ्गारेशं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र रुद्रलोके महीयते॥५८॥ अङ्गारकचतुर्थ्यां तु स्नानं तत्र समाचरेत् ॥ अक्षयं मोदते कालं शुचिः प्रयतमानसः ॥ ५९ ॥ अयोनिसम्भवे स्नात्वा न पश्येद्योनिसङ्कटम् ॥ पाण्डवेशं तु तत्रैव स्नानं तत्र समाचरेत् ॥ ६० ॥ अक्षयं मोदते कालमवध्यास्त्रिदशैरपि ॥ विष्णुलोकं ततो गत्वा क्रीडते भोगसंयुतः ॥६१॥ तत्र भुक्त्वा महाभोगान्मर्त्यराजोऽभिजायते ॥ कठेश्वरं ततो गच्छेत्तत्र स्नानं समाचरेत् ॥६२ ॥ उत्तरायणसम्प्राप्ते यदिच्छेत्तस्य तद्भवेत् ॥ चन्द्रभागां ततो गच्छेत्तत्र स्नानं समाचरेत् ॥ ६३ ॥ स्नातमात्रो नरो राजन्सोमलोके महीयते ॥ ततो गच्छेत्तु राजेन्द्र तीर्थं शक्रस्य विश्रुतम् ॥ ६४ ॥ पूजितं देवराजेन देवैरपि नमस्कृतम् ॥ तत्र स्नात्वा नरो राजन्दानं दत्त्वा तु काञ्चनम् ॥ ६५ ॥ अथवा नीलवर्णाभं वृषभं यः समुत्सृजेत् ॥ वृषभस्य तु रोमाणि तत्प्रसूतिकुलेषु च ॥ ६६ ॥ तावद्वर्षसहस्राणि नरो हरपुरे वसेत् ॥ ततः स्वर्गात् परिभ्रष्टो राजा भवति वीर्यवान् ॥ ६७ ॥ अश्वानां श्वेतवर्णानां सहस्राणां नराधिप ॥ स्वामी भवति मर्त्येषु तस्य तीर्थप्रभावतः ॥ ६८ ॥ ततो गच्छेच्च राजेन्द्र ब्रह्मावर्त्तमनुत्तमम् ॥ तत्र स्नात्वा नरो राजंस्तर्पयेत् पितृदेवताः ॥ ६९ ॥ उपोष्य रजनीमेकां पिण्डं दत्त्वा यथाविधि ॥ कन्यागते तथादित्ये अक्षयं स्यान्नराधिप ॥ ७० ॥ ततो गच्छेच्च राजेन्द्र कपिलातीर्थमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्कपिलां यः प्रयच्छति ॥ ७१ ॥ सम्पूर्णपृथिवीं दत्त्वा यत्फलं तदवाप्नुयात् ॥ नर्मदेशं परं तीर्थं न भूतं न भविष्यति ॥ ७२ ॥ तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ॥ नर्मदादक्षिणे कूले सङ्गमेश्वरमुत्तमम् ॥ ७३ ॥ तत्र स्नात्वा नरो राजन्सर्वयज्ञफलं लभेत्॥तत्र सर्वोऽपतो राजा पृथिव्यामेव

जायंते ॥ ७४ ॥ सर्वलक्षणसम्पूर्णः सर्वव्याधिविवर्जितः ॥ नर्मदे चोत्तरे कूले तीर्थं परमशोभनम् ॥ ७५ ॥ आदित्यायतनं दिव्यमीश्वरेण तु भाषितम् ॥ तस्य तीर्थप्रभावेण दत्तं भवति चाक्षयम् ॥ ७६ ॥ दरिद्रा व्याधिनो ये तु ये तु दुष्कृतकर्मिणः ॥ मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं तु यान्ति ते ॥ ७७ ॥ माघमासे तु सम्प्राप्ते शुक्लपक्षस्य सप्तमी ॥ वसेदायतने तत्र निराहारो जितेंद्रियः ॥ ७८ ॥ न जराव्याधितो मूको न चान्धो बधिरोऽथवा ॥ सुभगो रूपसम्पन्नः स्त्रीणां भवति वल्लभः ॥ ७९ ॥ एवं तीर्थं महापुण्यं मार्कण्डेयेन भाषितम् ॥ ये न जानन्ति राजेंद्र वंचितास्ते न संशयः ॥ ८० ॥ गर्गेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥ ८१ ॥ मोदते स्वर्गलोकस्थो यावदिन्द्राश्चतुर्दश ॥ समीपतः स्थितं तस्य नागेश्वरतपोवनम् ॥ ८२ ॥ तत्र स्नात्वा तु राजेन्द्र नागलोकमवाप्नुयात्॥ बह्विभिर्नागकन्याभिः क्रीडते कालमक्षयम् ॥ ८३ ॥ कुबेरभवनं गच्छेत्कुबेरो यत्र संस्थितः ॥ कालेश्वरं परं तीर्थं कुबेरो यत्र तोषितः ॥८४॥ तत्र स्नात्वा तु राजेंद्र सर्वसम्पदमाप्नुयात् ॥ ततः पश्चिमतो गच्छेन्मारुतालयमुत्तमम् ॥ ८५ ॥ तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः ॥ काञ्चनं तु ततो दद्याद्यथाशक्ति सुबुद्धिमान् ॥ ८६ ॥ पुष्पकेण विमानेन वायुलोकं स गच्छति ॥ यमतीर्थं ततो गच्छेन्माघमासे युधिष्ठिर ॥ ८७ ॥ कृष्णपक्षे चतुर्दश्यां स्नानं तत्र समाचरेत् ॥ नक्तम्भोज्यं ततः कुर्यान्न पश्येद्योनिसङ्कटम् ॥ ८८ ॥ अहल्यातीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र ह्यप्सरोभिः प्रमोदते ॥ ८९ ॥ अहल्या च तपस्तप्त्वा तत्र मुक्तिमुपागता चैत्रमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्दशी ॥ ९० ॥ कामदेवदिने तस्मिन्नहल्यां यस्तु पूजयेत् ॥ यत्र यत्र नरोत्पन्नो नरस्तत्र प्रियो भवेत् ॥ ९१ ॥ स्त्रीवल्लभो भवेच्छ्रीमान्कामदेव इवापरः ॥ अयोध्यां तु समासाद्य तीर्थं रामस्य विश्रुतम् ॥ ९२ ॥ स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥ सोमतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ९३ ॥ स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥ सोमग्रहे तु राजेन्द्र पापक्षयकरं नृणाम् ॥ ९४ ॥ त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम् ॥ यस्तु चान्द्रायणं कुर्यात्तस्मिंस्तीर्थे नराधिप ॥९५॥ सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥ अग्निप्रवेशेऽथ जले अथवापि ह्यनाशके ॥ ९६ ॥ सोमतीर्थे मृतो यस्तु नासौ मर्त्येऽभिजायते ॥ शुभतीर्थं ततो गच्छेत् स्नानं तत्र समा

चरेत् ॥ ९७ ॥ स्नातमात्रो नरस्तत्र गोलोकेषु महीयते ॥ ततो गच्छेत्तु राजेंद्र विष्णुतीर्थमनुत्तमम् ॥ ९८ ॥ योधनीपुरमाख्यातं विष्णु स्थानमनुत्तमम् ॥ असुरा योधितास्तत्र वासुदेवेन कोटिशः ॥ ९९ ॥ तत्र तीर्थं समुत्पन्नं विष्णुः प्रीतो भवेदिह ॥ अहोरात्रोपवासेन ब्रह्म हत्यां व्यपोहति ॥ १०० ॥ ततो गच्छेत्तु राजेंद्र तापसेश्वरमुत्तमम् ॥ हरिणी व्याधसन्त्रस्ता पतिता यत्र सा मृगी ॥ १०१ ॥ जले प्रक्षिप्तगात्रा तु अन्तरिक्षं गता च सा ॥ व्याधो विस्मितचित्तस्तु परं विस्मयमागतः ॥ १०२ ॥ तेन तापेश्वरं तीर्थं न भूतं न भविष्यति ॥ ततो गच्छेत्तु राजेंद्र ब्रह्मतीर्थमनुत्तमम् ॥ १०३ ॥ अमोहकमिति ख्यातं पितॄंश्चैवात्र तर्पयेत् ॥ पौर्णमास्याममायां तु श्राद्धं कुर्याद्यथा विधि ॥ १०४ ॥ तत्र स्नात्वा नरो राजन् पितृपिण्डं तु दापयेत् ॥ गजरूपा शिला तत्र तोयमध्ये प्रतिष्ठिता ॥ १०५ ॥ तस्यां तु दाप येत् पिण्डं वैशाख्यां तु विशेषतः ॥ तृप्यन्ति पितरस्तत्र यावत्तिष्ठति मेदिनी ॥ १०६ ॥ ततो गच्छेत्तु राजेंद्र सिद्धेश्वरमनुत्तमम् ॥ तत्र स्नात्वा नरो राजन्गणपत्यन्तिकं व्रजेत् ॥ १०७ ॥ ततो गच्छेत्तु राजेंद्र लिङ्गो यत्र जनार्दनः ॥ तत्र स्नात्वा तु राजेन्द्र विष्णुलोके मही यते ॥ १०८ ॥ नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ वामदेवः स्वयं तत्र तपोऽतप्यत वै महत् ॥ १०९ ॥ दिव्यं वर्षसहस्रं तु शंकरं पर्युपासत ॥ समाधिभङ्गदग्धास्तु शंकरेण महात्मना ॥ ११० ॥ श्वेतपर्वा यमश्चैव हुताशः शुक्रपर्वणि ॥ एते दग्धास्तु ते सर्वे कुसुमेश्वरसंस्थिताः ॥ १११ ॥ दिव्यवर्षसहस्रेण तुष्टस्तेषां महेश्वरः ॥ उमया सहितो रुद्रस्तुष्टस्तेषां वरप्रदः ॥ ११२ ॥ मोक्षयित्वा तु तान् सर्वान्नर्मदातटमास्थितः ॥ ततस्तीर्थप्रभावेण पुनर्देवत्वमागताः ॥ ११३ ॥ त्वत्प्रसादान्महादेव तीर्थं भवतु चोत्तमम् ॥ अर्द्धयोजनविस्तीर्णं क्षेत्रं दिक्षु समन्ततः॥११४॥तस्मिंस्तीर्थे नरः स्नात्वा चोपवासपरायणः॥कुसुमायुधरूपेण रुद्रलोके महीयते ॥ ११५ ॥ वैश्वानरो यमश्चैव कामदेवस्तथा मरुत् ॥ तपस्तप्त्वा तु राजेन्द्र परां सिद्धिमवाप्नुयुः ॥ ११६ ॥ अङ्कोलस्य समीपे तु नातिदूरे तु तस्य वै ॥ स्नानं दानं च तत्रैव भोजनं पिण्डपातनम् ॥ ११७॥ अग्निप्रवेशेऽथ जले अथवा तु ह्यनाशके॥ अनिवर्त्तिका गतिस्तस्य मृत स्यामुत्र जायते ॥ ११८ ॥ त्र्यम्बकेण तु तोयेन यश्चरुं श्रपयेन्नरः ॥ अङ्कोलमूले दत्वा तु पिण्डं चैव यथाविधि ॥ ११९ ॥ तृप्यन्ति पितर

स्तस्य यावच्चन्द्रदिवाकरौ ॥ उत्तरे त्वयने प्राप्ते घृतस्नानं करोति यः ॥ १२० ॥ पुरुषो वाथ स्त्री वापि वसेदायतने शुचिः ॥ सिद्धेश्वरस्य देवस्य प्रातः पूजां प्रकल्पयेत् ॥ १२१ ॥ स यां गतिमवाप्नोति न तां सर्वैर्महामखैः ॥ यदावतीर्णः कालेन रूपवान् सुभगो भवेत् ॥१२२॥ मर्त्ये भवति राजा च त्वासमुद्रान्तगोचरे ॥ क्षेत्रपालं न पश्येत्तु दण्डपाणिं महाबलम् ॥ १२३ ॥ वृथा तस्य भवेद्यात्रा ह्यदृष्ट्वा कर्णकुण्डलम् ॥ एवं तीर्थफलं ज्ञात्वा सर्वे देवाः समागताः ॥ मुंचन्ति कुसुमैर्वृष्टिं तेन तत्कुसुमेश्वरम् ॥ १२४ ॥ इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ छ ॥ मार्कण्डेय उवाच ॥ भार्गवेशं ततो गच्छेद्दग्धो यत्र जनार्दनः ॥ असुरैस्तु महायुद्धे महाबलपराक्रमैः ॥ १ ॥ हुङ्कारितास्तु देवेन दानवाः प्रलयं गताः ॥ तत्र स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २ ॥ शुक्लतीर्थस्य चोत्पत्तिं शृणु त्वं पाण्डुनन्दन ॥ हिमवच्छिखरे रम्ये नानाधातुविचित्रिते ॥३ ॥ तरुणादित्यसङ्काशे तप्तकाञ्चनसप्रभे ॥ वज्रस्फाटिकसोपाने चित्रपट्टशिलातले ॥ ४ ॥ जाम्बूनदमये दिव्ये नानापुष्पोपशोभिते ॥ तत्रासीनं महादेवं सर्वज्ञं प्रभुमव्ययम् ॥ ५ ॥ लोकानुग्रहकर्त्तारं गणवृन्दैः समावृतम् ॥ स्कन्दनन्दिमहाकालैर्वीरभद्रगणादिभिः ॥ उमया सहितं देवं मार्कण्डिः पर्यपृच्छत ॥ ६ ॥ देवदेव महादेव ब्रह्मविष्णिवन्द्रसंस्तुत ॥ संसारभयभीतोऽहं सुखोपायं ब्रवीहि मे ॥ ७ ॥ भगवन्भूतभव्येश सर्वपापप्रणाशनम् ॥ तीर्थानां परमं तीर्थं तद्वदस्व महेश्वर ॥८॥ ईश्वर उवाच ॥ शृणु विप्र महाप्राज्ञ सर्वशास्त्रविशारद ॥ स्नानाय गच्छ सुभग ऋषिसङ्घैः समावृतः ॥ ९ ॥ मन्वत्रिकश्यपाश्चैव याज्ञवल्क्यो शनोऽङ्गिराः ॥ यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ॥ १० ॥ नारदो गौतमश्चैव सेवन्ते धर्म्मकाङ्क्षिणः ॥ गङ्गां कनखलं पुण्यं प्रयागं पुष्करं गयाम् ॥ ११ ॥ कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे ॥ दिवा वा यदि वा रात्रौ शुक्लतीर्थं महाफलम् ॥ १२ ॥ दर्शनात्स्पर्शनाच्चैव स्नानाद्दानात्तपोजपात् ॥ होमाच्चैवोपवासाच्च शुक्लतीर्थं महाफलम् ॥ १३ ॥ शुक्लतीर्थं महापुण्यं नर्मदायां व्यवस्थितम् ॥ चाणक्यो नाम राजर्षिः सिद्धिं तत्र समागतः ॥ १४ ॥ एतत्क्षेत्रं सुविपुलं योजनं वृत्तसंस्थितम् ॥ शुक्लतीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥ १५ ॥ पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति ॥ जगतीदर्शनाच्चैव भ्रूणहत्यां व्यपोहति ॥ १६ ॥ अहं तत्र ऋषिश्रेष्ठ तिष्ठामि ह्युमया सह ॥ वैशाखे चैत्र

मास तु कृष्णपक्षे चतुर्द्दशी ॥ १७ ॥ कैलासाच्चापि निष्क्रम्य तत्र सन्निहितो ह्यहम् ॥ दैत्यदानवगन्धर्वाः सिद्धविद्याधरास्तथा ॥ १८ ॥
गणाश्चाप्सरसो नागाः सर्वे देवाः समागताः ॥ गगनस्थास्तु तिष्ठन्ति विमानैः सार्वकामिकैः ॥ १९ ॥ शुक्लतीर्थं तु राजेन्द्र ह्यागता धर्म्म
कांक्षिणः ॥ रजकेन यथा वस्त्रं शुक्लं भवति वारिणा ॥२०॥ आजन्मजनितं पापं शुक्लं तीर्थं व्यपोहति ॥ स्नानं दानं महापुण्यं मार्कण्डे ऋषि
सत्तम ॥ २१ ॥ शुक्लतीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः ॥ २२ ॥ अहोरात्रोपवासेन शुक्ल
तीर्थे व्यपोहति ॥ तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ॥ २३ ॥ देवार्च्चनेन या पुष्टिर्न सा क्रतुशतैरपि ॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे
चतुर्द्दशी ॥ २४ ॥ घृतेन स्नापयेद्देवमुपोष्य परमेश्वरम् ॥ एकविंशत्कुलोपेतो न च्यवेदैश्वरात्पदात् ॥ २५ ॥ शुक्लतीर्थं महापुण्यमृषिसिद्ध
निषेवितम् ॥ तत्र स्नात्वा नरो राजन्न पुनर्जन्मभाग्भवेत् ॥ २६ ॥ स्नात्वा वै शुक्लतीर्थे तु ह्यर्चयेद्वृषभध्वजम् ॥ कपालपूरणं कृत्वा तुष्यत्यत्र
महेश्वरः ॥ २७ ॥ अर्द्धनारीश्वरं देवं पटे भक्त्या लिखापयेत् ॥ शंखतूर्यनिनादैश्च ब्रह्मघोषैश्च सद्द्विजैः ॥ २८ ॥ जागरं कारयेत्तत्र नृत्य
गीतादिमङ्गलैः ॥ प्रभाते शुक्लतीर्थे तु स्नानं वै देवतार्च्चनम् ॥२९॥ आचार्य्यान्भोजयेत्पश्चाच्छिवव्रतपरान् शुचीन् ॥ दक्षिणां च यथाशक्ति
वित्तशाठ्यं विवर्ज्जयेत् ॥ ३० ॥ प्रदक्षिणं ततः कृत्वा शनैर्देवान्तिकं व्रजेत् ॥ एवं वै कुरुते यस्तु तस्य पुण्यफलं शृणु ॥ ३१ ॥ दिव्ययानं
समारूढो गीयमानोऽप्सरोगणैः ॥ शिवतुल्यबलोपेतास्तिष्ठत्याभूतसंप्लवम् ॥ ३२ ॥ शुक्लतीर्थे तु या नारी ददाति कनकं शुभम् ॥ घृतेन
स्नापयेद्देवं कुमारं चापि पूजयेत् ॥ ३३ ॥ एवं या कुरुते भक्त्या तस्याः पुण्यफलं शृणु ॥ मोदते शर्वलोकस्था यावदिन्द्राश्चतुर्दश ॥ ३४ ॥
पौर्णमास्यां चतुर्दश्यां संक्रान्तौ विषुवे तथा ॥ स्नात्वा तु सोपवासः सन्विजितात्मा समाहितः ॥ ३५ ॥ दानं दद्याद्यथाशक्त्या
प्रीयेतां हरिशङ्करौ ॥ एवं तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥ ३६ ॥ अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा ॥ उद्वाहयति यस्तीर्थे
तस्य पुण्यफलं शृणु ॥ ३७ ॥ यावत्तद्रोमसंख्या च तत्प्रसूतिकुलेषु च ॥ तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ३८ ॥ इति श्रीमात्स्ये
महापुराणे नर्मदामाहात्म्ये द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ मार्कण्डेय उवाच ॥ ततस्त्वनरकं गच्छेत्स्नानं तत्र समाचरेत् ॥

कर्तुमुपायत्रितयेन तु॥दण्डेन तान्वशीकुर्याद्दण्डो हि वशकृन्नृणाम् ॥ १ ॥ सम्यक्प्रणयनं तस्य तथा कार्यं महीक्षिता ॥ धर्मशास्त्रानुसारेण ससहायेन धीमता ॥ २ ॥ तस्य सम्यक्प्रणयनं यथा कार्यं महीक्षिता ॥ वानप्रस्थांश्च धर्मज्ञान्निर्ममान्निष्परिग्रहान् ॥ ३ ॥ स्वदेशे परदेशे वा धर्मशास्त्रविशारदान् ॥ समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम् ॥ ४ ॥ आश्रमी यदि वा वर्णी पूज्यो वाथ गुरुर्महान् ॥ नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मेण तिष्ठति॥५॥अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ इह राज्यात्परिभ्रष्टो नरकं च प्रपद्यते॥६॥ तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः ॥ दण्डप्रणयनं कार्यं लोकानुग्रहकाम्यया ॥७॥यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ॥ प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ८ ॥ बालवृद्धातुरयतिद्विजस्त्रीविधवा यतः ॥ मात्स्यन्यायेन भक्षेरन्यदि दण्डं न पातयेत् ॥९॥ देवदैत्योरगगणाः सर्वे भूतपतत्रिणः ॥ उत्क्रामयेयुर्मर्यादां यदि दंडं न पातयेत् ॥ १० ॥ एष ब्रह्माभिशापेषु सर्वप्रहरणेषु च ॥ सर्वविक्रमकोपेषु व्यवसाये च तिष्ठति ॥ ११ ॥ पूज्यन्ते दण्डिनो देवैर्न पूज्यन्ते त्वदण्डिनः ॥ न ब्रह्माणं विधातारं न पूषार्यमणावपि ॥ १२ ॥ यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ॥ रुद्रमग्निं च शक्रं च सूर्याचंद्रमसौ तथा ॥ १३॥ विष्णुं देवगणांश्चान्यान्दण्डिनः पूजयन्ति च ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ॥ १४ ॥ दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः ॥ राजदण्डभयादेव पापाः पापं न कुर्वते ॥ १५ ॥ यमदण्डभयादेके परस्परभयादपि ॥ एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १६ ॥ अन्धेतमसि मज्जेयुर्यदि दण्डं न पातयेत ॥ यस्माद्दण्डो दमयति अदण्ड्यान्दण्डयत्यपि ॥ दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ १७ ॥ दण्डस्य भीतैस्त्रिदशैः समेतैर्भागो धृतः शूलधरस्य यज्ञे ॥ दत्तं कुमारे ध्वजिनीपतित्वं वरं शिशूनां च भयाद्बलस्य ॥ १८ ॥ इति श्रीमात्स्ये महापुराणे राजधर्मे दण्डप्रशंसानाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ मत्स्य उवाच ॥ दण्डप्रणयनार्थाय राजा सृष्टः स्वयम्भुवा ॥ देवभागानुपादाय सर्वभूतादिगुप्तये ॥ १ ॥ तेजसा यदमुं कश्चिन्नैव शक्नोति वीक्षितुम् ॥ ततो भवति लोकेषु राजा भास्करवत्प्रभुः ॥ २ ॥ यदास्य दर्शने लोकः प्रसादमुपगच्छति ॥ नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥ ३ ॥ यथा यमः प्रियद्वेष्ये प्राप्ते काले प्रयच्छति ॥

तथा राज्ञा विघातव्याः प्रजास्ताद्धि यमव्रतम् ॥ ४ ॥ वरुणेन यथा पाशैर्बद्ध एव प्रदृश्यते॥तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ५ ॥ परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यति मानवः ॥ तथा प्रकृतयो यस्मिन्स चन्द्रप्रतिमो नृपः ॥ ६ ॥ प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ॥ दुष्टसामन्तहिंस्रेषु राजाऽऽग्नेयव्रते स्थितः ॥ ७ ॥ यथा सर्वाणि भूतानि धरा धारयते स्वयम् ॥ तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ ८ ॥ इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च ॥ चन्द्रस्याग्नेः पृथिव्याश्च तेजोव्रतं नृपश्चरेत् ॥ ९ ॥ वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यथ वर्षति ॥ तथाभिवर्षेस्स्वं राज्यं काममिन्द्रव्रतं स्मृतम् ॥१० ॥ अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ॥ तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ११ ॥ प्रविश्य सर्वभूतानि यथा चरति मारुतः ॥ तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ १२ ॥ इति श्रीमात्स्ये महापुराणे राजधर्मे राज्ञो लोकपालसाम्यनिर्देशो नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥ मत्स्य उवाच ॥ निक्षेपस्य समं मूल्यं दण्ड्यो निक्षेपभुक् तथा ॥ वस्त्रादिकसमस्तस्य तदा धर्मो न हीयते ॥ १ ॥ यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ॥ तावुभौ चोरवच्छास्यौ दाप्यौ वा द्विगुणं धनम् ॥ २ ॥ उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ॥ ससहायः स हन्तव्यः प्रकामं विविधैर्वधैः ॥ ३ ॥ यो याचितं समादाय न तद्दद्याद्यथाक्रमम् ॥ स निगृह्य बलाद्दाप्यो दण्ड्यो वा पूर्वसाहसम् ॥ ४ ॥ अज्ञानाद्यदि वा कुर्यात्परद्रव्यस्य विक्रयम् ॥ निर्दोषो ज्ञानपूर्वं तु चोरवद्वधमर्हति ॥ ५ ॥ मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ॥ दण्ड्यः स मूल्यं सकलं धर्मज्ञेन महीक्षिता ॥ ६ ॥ द्विजे भोज्ये तु सम्प्राप्ते प्रतिवेश्ममभोजयन् ॥ हिरण्यमाषकं दण्ड्यः पापे नास्ति व्यतिक्रमः ॥ ७ ॥ आमन्त्रितो द्विजो यस्तु वर्त्तमानश्च स्वे गृहे ॥ निष्कारणं न गच्छेद्यः स दाप्योऽष्टशतं दमम् ॥ ८ ॥ प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः ॥ ९ ॥ भृत्यश्चाज्ञां न कुर्याद्यो दर्पात्कर्म यथोदितम् ॥ स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ १० ॥ संगृहीतं न दद्याद्यः काले वेतनमेव च ॥ अकाले तु त्यजेद्भृत्यं दण्ड्यः स्याच्छतमेव च ॥ ११ ॥ यो ग्रामदेशसस्यानां कृत्वा सत्येन संविदम् ॥ विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥ १२ ॥ क्रीत्वा विक्रीय वा किंचिद्यस्ये

हानुशयो भवेत् ॥ सोऽन्तर्दशाहात्तत्साम्यं दद्याच्चैवाददति वा ॥ १३ ॥ परेण तु दशाहस्य न दद्यान्नैव दापयेत् ॥ आददद्धिददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥ १४ ॥ यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ॥ तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥ १५ ॥ अकन्येति यः कन्यां ब्रूयाद्दोषेण मानवः ॥ स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ १६ ॥ यस्त्वन्यां दर्शयित्वान्यां वोढः कन्यां प्रयच्छति ॥ उत्तमं तस्य कुर्वीत राजा दण्डं तु साहसम् ॥ १७ ॥ वरो दोषाननाख्याय यः कन्यां वरयेदिह ॥ दत्ताप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम् ॥ १८ ॥ प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति ॥ दण्डः कार्यो नरेन्द्रेण तस्याप्युत्तमसाहसः ॥ १९ ॥ सत्यङ्कारेण वा वाचा युक्तं पण्यमसंशयम् ॥ लुब्धो ह्यन्यत्र विक्रेता षट्शतं दण्डमर्हति ॥ २० ॥ दुहितुः शुल्कविक्रेता सत्यङ्कारात्तु सन्त्यजेत् ॥ द्विगुणं दण्डयेदेनमिति धर्मो व्यवस्थितः ॥ २१ ॥ मूल्यैकदेशं दत्त्वा तु यदि क्रेता धनं त्यजेत् ॥ स दण्ड्यो मध्यमं दण्डं तस्य पण्यस्य मोक्षणम् ॥ २२ ॥ दुह्याद्धेनुं च यः पालो गृहीत्वा भक्तवेतनम् ॥ स तु दण्ड्यः शतं राज्ञा सुवर्णं चाप्यरक्षिता ॥ २३ ॥ दण्डं दत्त्वा तु विरमेत्स्वामितः कृतलक्षणः ॥ बद्धः कार्ष्णायसैः पाशैस्तस्य कर्मकरो भवेत् ॥ २४ ॥ धनुःशतपरीणाहो ग्रामस्य तु समन्ततः ॥ द्विगुणं त्रिगुणं वापि नगरस्य तु कल्पयेत् ॥ २५ ॥ वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत् ॥ छिद्रं वा वारयेत्सर्वं श्वशूकरमुखानुगम् ॥ २६ ॥ यत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ॥ न तत्र कारयेद्दण्डं नृपतिः पशुरक्षिणे ॥ २७ ॥ अनिर्दशाहां गां सूतां वृषं देवपशुं तथा ॥ छिद्रं वा वारयेत्सर्वं न दण्ड्या मनुरब्रवीत् ॥ २८ ॥ अथोऽन्यथा विनष्टस्य दशांशं दण्डमर्हति ॥ पाल्यस्य पालकस्वामी विनाशे क्षत्रियस्य तु ॥ २९ ॥ भक्षयित्वोपविष्टस्तु द्विगुण दण्डमर्हति ॥ विंशं दण्ड्याद्दशगुणं विनाशे क्षत्रियस्य तु ॥ ३० ॥ गृहं तडागमारामं क्षेत्रं वापि समाहरन् ॥ शतानि पंच दंडः स्यादज्ञानाद्द्विशतो दमः ॥ ३१ ॥ सीमाबन्धनकाले तु सीमान्तं यो हि कारयेत् ॥ तेषां संज्ञां ददानस्तु जिह्वाच्छेदनमाप्नुयात् ॥ ३२ ॥ अथैनामपि यो दद्यात्संविदं वाधिगच्छति ॥ उत्तमं साहस दण्डय इति स्वायम्भुवोऽब्रवीत् ॥ ३३ ॥ वर्णानामानुपूर्व्येण त्रयाणामविशेषतः ॥ अकार्यकारिणः सर्वान्प्रायश्चित्तानि कारयेत् ॥ ३४ ॥ असत्येन प्रमाप्य स्त्रीशूद्रहत्याव्रतं चरेत् ॥

दानेन च धनेनैकं सर्पादीनामशक्नुवन् ॥ ३५ ॥ एकैकं स चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥ फलदानां च वृक्षाणां छेदने जप्यमृक्शतम् ॥ ३६॥ गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ अस्थिमतां च सत्वानां सहस्रस्य प्रमापणे ॥ पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ ३७ ॥ किञ्चिदेयं च विप्राय दद्यादस्थिमतां वधे ॥ अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति ॥ ३८ ॥ अन्नादिजानां सत्वानां रसजानां च सर्वशः ॥ फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥ ३९ ॥ कृष्टजानामोषधीनां च जातानां च स्वयं वने ॥ वृथालम्भेऽनुगच्छेत दिनमेकं पयोव्रती ॥ ४० ॥ एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ॥ स्तेयकर्त्रपहर्तॄणां श्रूयतां व्रतमुत्तमम् ॥ ४१ ॥ धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः ॥ सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥ ४२ ॥ मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य तु ॥ कूपवापीजलानां तु शुद्धिश्चान्द्रायणं स्मृतम् ॥ ४३ ॥ द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः ॥ चरेत्सांतपनं कृच्छ्रं तन्निर्यात्यविशुद्धये ॥ ४४॥ भक्ष्यभोज्यापहरणे यानशय्यासनस्य तु ॥ पुष्पमूलफलानां तु पंचगव्यं विशोधनम् ॥४५ ॥ तृणकाष्ठद्रुमाणां तु शुष्कान्नस्य गुडस्य च ॥ चैलचर्मामिषाणां तु त्रिरात्रं स्यादभोजनम् ॥ ४६ ॥ मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥ अयस्कांस्योपलानां च द्वादशाहं कणान्नभुक् ॥ ४७ ॥ कार्पासकीटजोर्णानां द्विशफैकशफस्य च ॥ पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः ॥ ४८ ॥ एतैर्व्रतैरपोहन्ति पापं स्तेयकृतं द्विजः ॥ अगम्यागमनीयं तु व्रतैरेभिरपानुदेत् ॥ ४९॥ गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ॥ सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ ५० ॥ पितृष्वस्त्रीयभगिनीं स्वस्त्रीयां मातुरेव च ॥ मातुश्च भ्रातुरार्यायां गत्वा चान्द्रायणं चरेत् ॥ ५१ ॥ एताः स्त्रियस्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान् ॥ ज्ञातीनां च स्त्रियो यास्तु पतितानुगताश्च याः ॥ ५२ ॥ अमानुषीषु पुरुषो उदक्यायामयोनिषु ॥ रेतः सिक्त्वा जले चैव कृच्छ्र सान्तपनं चरेत् ॥ ५३ ॥ मैथुनं च समालोक्य पुंसि योषिति वा द्विजः ॥ गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥ ५४॥ चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च॥ पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥५५ ॥ विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि ॥ यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥ ५६ ॥ सा चेत् पुनः प्रदुष्येत्तु सदृशेनोपमन्त्रिता ॥

कृच्छ्रं चान्द्रायणं चैव तत्तस्याः पावनं स्मृतम् ॥५७॥ यः करोत्येकरात्रेण वृषलीसेवनं द्विजः॥ तद्भैक्ष्यभुग्जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥५८॥ एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः॥पतितैः सम्प्रयुक्तानामिमां शृणुत निष्कृतिम्॥५९॥संवत्सरेण पतति पतितेन सहाचरन्॥याजनाध्यापनाद्योनादनुयानाशनासनात्॥ ६० ॥यो येन पतितेनैषां संसर्गं याति मानवः ॥ स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये ॥६१॥ पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह ॥ निन्दितेऽहनि सायाह्ने ज्ञातिभिर्गुरुसन्निधौ ॥६२॥ दासी घटमपां पूर्णं पर्यस्येत् प्रेतवत् सदा॥ अहोरात्रमुपासीरन् नाशौचं बान्धवैः सह ॥ ६३ ॥ निवर्त्तयेरंस्तस्मात्तु सम्भाषणसहासनम् ॥ दायादस्य प्रमाणं च यात्रामेवं च लौकिकीम् ॥ ६४ ॥ ज्येष्ठाभावान्निवर्त्तेत ज्येष्ठ्यावाप्तं च यत्पुनः ॥ ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः ॥ ६५ ॥ स्थापितां चापि मर्यादां ये भिन्द्युः पापकर्मिणः ॥ सर्वे पृथग्दण्डनीया राज्ञा प्रथमसाहसम् ॥ ६६ ॥ शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ॥ वैश्यस्तु द्विशतं राजञ्छूद्रस्तु वधमर्हति ॥ ६७॥ पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ॥ वैश्यस्याप्यर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥६८॥ क्षत्रियस्याप्नुयाद्वैश्यः साहसं पुनरेव च ॥ शूद्रः क्षत्रियमाक्रुश्य जिह्वाच्छेदनमाप्नुयात् ॥ ६९ ॥ पञ्चाशत्क्षत्रियो दंड्यस्तथा वैश्याभिशंसने ॥ शूद्रे चैवार्द्धपञ्चाशत्तथा धर्म्मो न हीयते ॥७०॥ वैश्यस्याक्रोशने दंड्यः शूद्रश्चोत्तमसाहसम् ॥ शूद्राक्रोशे तथा वैश्यः शतार्द्धं दंडमर्हति ॥७१॥ सवर्णाक्रोशने दण्ड्यस्तथा द्वादशकं स्मृतम् ॥ वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥ ७२ ॥ एकजातिर्द्विजातिं तु वाचा दारुणया क्षिपन् ॥ जिह्वायाः प्राप्नुयाच्छेदं जघन्यः प्रथमो हि सः ॥७३ ॥ नामजातिगृहं तेषामभिद्रोहेण कुर्वतः ॥ निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ ७४ ॥ धर्मोपदेशं शूद्रस्तु द्विजानामभिकुर्वतः ॥ तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥ ७५॥श्रुतिं देशं च जातिं च कर्म शारीरमेव च ॥वितथं च ब्रुवन्दण्ड्यो राज्ञा द्विगुणसाहसम्॥७६॥यस्तु पातकसंयुक्तः क्षिपेद्वर्णान्तरं नरः ॥ उत्तमं साहसं दण्डः पात्यस्तस्मिन्यथाक्रमम् ॥ ७७ ॥ राज्ञो निवेशनियमं वितथं यान्ति वै मिथः ॥ सर्वे द्विगुणदण्ड्यास्ते विप्रलम्भान्नृपस्य तु ॥७८॥ प्रीत्या मयास्याभिहितं प्रमादेनाथवा वदेत् ॥ भूयो न चैवं वक्ष्यामि स तु दण्डार्द्धभाग्भवेत् ॥ ७९ ॥ काणं वाप्यथवा खञ्जमन्धं चापि तथाविधम् ॥ तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणं

घनम्॥८०॥मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम् ॥ आक्रोशयञ्छतं दण्ड्यः पन्थानं चाददन्गुरोः॥८१॥गुरुवर्ज्यं तु मानार्हं यो हि मार्गं न यच्छति ॥ स दाप्यः कृष्णलं राज्ञस्तस्य पापस्य शान्तये ॥८२॥ एकजातिर्द्विजातिं तु येनाङ्गेनापराध्नुयात् ॥ तदेव च्छेदयेत्तस्य क्षिप्रमेवाविचारयन् ॥ ८३ ॥ अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः ॥ अवमूत्रयतो मेढ्रमपशब्दयतो गुदम् ॥८४ ॥ सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः॥कट्यां कृताङ्को निर्वास्यः स्फिचं वाप्यस्य कर्त्तयेत् ॥८५॥ केशेषु गृह्णतो हस्तं छेदयेदविचारयन् ॥ पादयोर्नासिकायां च ग्रीवायां वृषणेषु च॥८६॥त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ॥ मांसभेत्ता च षण्निष्कान्निर्वास्यस्त्वस्थिभेदकः॥८७॥ अङ्गभङ्गकरस्याङ्गं तदेवापहरेन्नृपः ॥ दण्डपारुष्यकृद्दण्ड्यः समुत्थानव्ययं तथा॥८८ ॥ अर्द्धपादकरः कार्यो गोगजाश्वोष्ट्रघातकः ॥ पशुक्षुद्रमृगाणां च हिंसायां द्विगुणो दमः॥८९॥ पञ्चाशच्च भवेद्दण्ड्यस्तथैव मृगपक्षिषु ॥ कृमिकीटेषु दण्ड्यः स्याद्रजतस्य च माषकम् ॥९० ॥ तस्यानुरूपं मूल्यं च प्रदद्यात्स्वामिने तथा ॥ स्वस्वामिकानां सकलं शेषाणां दण्डमेव तु ॥९१॥ वृक्षं तु सफलं छित्त्वा सुवर्णं दण्डमर्हति ॥ द्विगुणं दण्डयेच्चैनं पथि सीम्नि जलाशये ॥ ९२ ॥ छेदनादफलस्यापि मध्यमं साहसं स्मृतम् ॥ गुल्मवल्लीलतानां च सुवर्णस्य च माषकम् ॥ ९३ ॥ वृथाच्छेदी तृणस्यापि दण्ड्यः कार्षापणं भवेत् ॥ त्रिभागं कृष्णला दण्ड्याः प्राणिनस्ताडने तथा ॥ ९४ ॥ देशकालानुरूपेण मूल्यं राजा द्रुमादिषु ॥ तत्स्वामिनस्तथा दण्ड्या दण्डमुक्तस्तु पार्थिव ॥ ९५ ॥ यत्रातिवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु ॥ तत्र स्वामी भवेद्दण्ड्यो नाप्तश्चेत् प्राजको भवेत् ॥९६॥प्राजकश्च भवेदाप्तः प्राजको दण्डमर्हति ॥ नास्ति दण्डश्च तस्यापि तथा वै हेतुकल्पकः ॥९७॥द्रव्याणि यो हरेद्यस्य जानतोऽजानतोऽपि वा ॥ स तस्योत्पादयेत्तुष्टिं राज्ञो दद्यात्ततो दमम् ॥९८॥ यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च तां प्रपाम् ॥ सदण्डं प्राप्नुयान्माषं तच्च सम्प्रतिपादयेत् ॥ ९९ ॥ धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥ शेषेऽप्येकादशगुणं तस्य दण्डं प्रकल्पयेत् ॥ १०० ॥ तथा भक्ष्यान्नपानानां न तथाप्यधिके वधः ॥ सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥१०१ ॥ पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥ महापशूनां हरणे शस्त्राणामौषधस्य च ॥१०२॥ मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥ दध्नः क्षीरस्य तक्रस्य पानीयस्य रसस्य च॥१०३॥

वेणुवैदलभाण्डानां लवणानां तथैव च ॥ मृन्मयानां च सर्वेषां मृदो भस्मन एव च ॥१०४ ॥ कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् ॥ गोषु ब्राह्मणसंस्थासु महिषीषु तथैव च ॥ १०५ ॥ अश्वापहारकश्चैव सद्यः कार्योऽर्द्धपादकः ॥ सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च ॥ १०६ ॥ मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ॥ मांसस्य मधुनश्चैव यच्चान्यद्वस्तुसम्भवम् ॥ १०७ ॥ अन्येषां लवणादीनां मद्यानामोदनस्य च ॥ पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥ १०८ ॥ पुष्पेषु हरिते धान्ये गुल्मवल्लीलतासु च ॥ अन्नेषु परिपूर्णेषु दण्डः स्यात्पञ्चमाषकम् ॥ परिपूर्णेषु धान्येषु शाकमूलफलेषु च ॥१०९॥ निरन्वये शतं दण्डः सान्वये द्विशतं दमः ॥ येन येन यथाङ्गेन स्तेनोऽन्येषु विचेष्टते ॥ ११० ॥ तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥ द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ॥ १११ ॥ त्रपुसोर्वारुको द्वौ च तावन्मात्रं फलेषु च ॥ तथा च सर्वधान्यानां मुष्टिग्राहेण पार्थिव ॥ ११२ ॥ शाके शाकप्रमाणेन गृह्यमाणे न दुष्यति ॥ वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च ॥ ११३ ॥ तृणं गोऽभ्यवहारार्थमस्तेयं मनुरब्रवीत् ॥ अदेववाटिजं पुष्पं देवतार्थं तथैव च ॥ ११४ ॥ आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ शृङ्गिणं नखिनं राजन्दंष्ट्रिणं च वधोद्यतम् ॥ ११५ ॥ यो हन्यान्न स पापेन लिप्यते मनुजेश्वर ॥ गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ॥११६॥ आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन॥११७॥ प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥ गृहक्षेत्राभिहर्त्तारस्तथागम्याभिगामिनः ॥ ११८ ॥ अग्निदो गरदश्चैव तथा चाभ्युद्यतायुधः॥ अभिचारं तु कुर्वाणो राजगामि च पैशुनम् ॥ ११९ ॥ एते हि कथिता लोके धर्मज्ञैराततायिनः ॥ भिक्षुकोऽप्यथवा नारी योऽपि वा स्यात् कुशीलवः ॥ १२०॥ प्रविशेत्प्रतिषिद्धस्तु प्राप्नुयाद्द्विगुणं दमः ॥ परस्त्रीणां तु सम्भाषे तीर्थेऽरण्ये गृहेऽपि वा ॥ १२१॥ नदीनां चैव सम्भेदे स संग्रहणमाप्नुयात् ॥ न सम्भाषेत्परस्त्रीभिः प्रतिषिद्धः समाचरेत् ॥ १२२ ॥ प्रतिषिद्धे समाभाष्य सुवर्णं दण्डमर्हति ॥ नेशाचारणदारेषु विधिरात्मोपजीविषु ॥ १२३ ॥ सज्जयन्ति मनुष्यैस्ता निगूढं वा दरन्त्युत ॥ किंचिदेव तु दाप्यः स्यात्सम्भाषेणाप्चारयन् ॥ १२४ ॥ प्रेष्यासु चैव सर्वासु गृहप्रव्रजितासु च ॥ योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ॥ १२५ ॥ सकामां दूषमाणस्तु प्राप्नुयाद्द्विशतं दमम् ॥

यश्च संचारकस्तत्र पुरुषः स तथा भवेत् ॥ १२६ ॥ पारदारिकवद्दण्डयो योऽपि स्यादवकाशदः ॥ बलात्सन्दूषयेद्यस्तु परभार्यां नरः क्वचित् ॥ १२७ ॥ वधो दण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः ॥ रजस्तृतीयं या कन्या स्वगृहे प्रतिपद्यते ॥ १२८ ॥ अदण्डया सा भवेद्राज्ञा वरयन्ती पतिं स्वयम् ॥ स्वदेशे कन्यकां दत्त्वा तामादाय तथा व्रजेत् ॥ १२९ ॥ परदेशे भवेद्वध्यः स्त्रीचोरः स यतो भवेत् ॥ अद्रव्यां मृतपत्नीं तु संगृह्णन्नापराध्यति ॥ १३० ॥ सद्रव्यां तां संग्रहीता दण्डं तु क्षिप्रमर्हति ॥ उत्कृष्टं या भजेत्कन्या देया तस्यैव सा भवेत् ॥ १३१ ॥ यद्यान्यं सेवमानां च संयतां वासयेद्गृहे ॥ उत्तमां सेवमानस्तु जघन्यो वधमर्हति ॥ जघन्यमुत्तमा नारी सेवमाना तथैव च ॥ १३२ ॥ भर्तारं लङ्घयेद्या स्त्री ज्ञातिभिर्गुणदर्पिता ॥ तां च निष्क्रासयेद्राजा संस्थाने बहुसंस्थिते ॥ १३३ ॥ हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ॥ वासयेत्स्वैरिणीं नित्यं सवर्णेनाभिदूषिताम् ॥ १३४ ॥ ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात् ॥ वासश्च मलिनं नित्यं शिलां संप्राप्नुयाद्दश ॥ १३५ ॥ ब्राह्मणः क्षत्रियो वैश्यः क्षत्रविट्शूद्रयोषितः ॥ व्रजन्दाप्यो भवेद्राज्ञा दण्डमुत्तमसाहसम् ॥ १३६ ॥ वैश्यागमे च विप्रस्य क्षत्रियस्यान्त्यजागमे ॥ मध्यमं प्रथमं वैश्यो दण्डयः शूद्रागमाद्भवेत् ॥ १३७ ॥ शूद्रः सवर्णागमने शतं दण्डयो महीक्षिता ॥ वैश्यस्तु द्विगुणं राजन्क्षत्रस्तु त्रिगुणं तथा ॥ १३८ ॥ ब्राह्मणश्च भवेद्दण्डयस्तथा राजंश्चतुर्गुणम् ॥ अगुप्तासु भवेद्दण्डः स्वगुप्तास्वाधिको भवेत् ॥ १३९ ॥ मातापितृष्वसा श्वश्रूर्मातुलानी पितृव्यजा ॥ पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी तथा ॥ भ्रातृभार्यागमे पूर्वाद्दण्डस्तु द्विगुणो भवेत् ॥ १४० ॥ भागिनेयी तथा चैव राजपत्नी तथैव च ॥ तथा प्रव्रजिता नारी वर्णोत्कृष्टा तथैव च ॥ १४१ ॥ इत्यगम्याश्च निर्दिष्टास्तासां तु गमने नरः ॥ शिश्नस्योत्कर्त्तनं कृत्वा ततस्तु वधमर्हति ॥ १४२ ॥ चण्डालीं च श्वपाकीं च गच्छन्वधमवाप्नुयात् ॥ १४३ ॥ तिर्यग्योनिं च गोवर्ज्यं मैथुनं यो निषेवते ॥ वपनं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥ १४४ ॥ सुवर्णं च भवेद्दण्डयो गां व्रजन्मनुजोत्तम ॥ वेश्यागामी द्विजो दण्डयो वेश्याशुल्कसमं पणम् ॥ १४५ ॥ गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ॥ वेतनं द्विगुणं स्याद्दण्डं च द्विगुणं तथा ॥ १४६ ॥ अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारयेत् ॥ तस्य दण्डो भवेद्राजन्सुवर्णस्य च माषकम् ॥ १४७ ॥ नीत्वा भोगान्न यो दद्याद्दाप्यो द्विगुण

वेतनम्॥ राज्ञश्च द्विगुणं दण्डं तथा धर्म्मो न हीयते ॥ १४८ ॥ बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमम् ॥ दद्युः पृथक् पृथक् सर्वे दण्डं च द्विगुणं परम् ॥१४९॥ न माता न पिता न स्त्री न ऋत्विग्न याज्यमानवाः ॥ अन्योन्यं पतितास्त्याज्या योगे दण्ड्याः शतानि षट्॥१५०॥ पतिता गुरवस्त्याज्या न तु माता कथंचन ॥ गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ १५१ ॥ अधीयानोऽप्यनध्याये दण्ड्यः कार्षापण त्रयम् ॥ अध्यापकश्च द्विगुणं तथाचारस्य लङ्घने ॥ १५२ ॥ अनुक्तस्य भवेद्दण्डः सुवर्णस्य च कृष्णलम् ॥ भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ॥ १५३ ॥ कृतापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ॥ १५४ ॥ अतोऽन्यथा प्रहरतः प्राप्तं स्याच्चोरकिल्बिषम् ॥ दूतीं समाह्वयंश्चैव यो निषिद्धं समाचरेत् ॥ १५५ ॥ आच्छन्नं वा प्रकाशं वा स दण्ड्यः पार्थिवेच्छया ॥ वासांसि फलकैः श्लक्ष्णैर्निर्णिज्याद्रजकः शनैः ॥ १५६ ॥ अतोऽन्यथा हि कुर्वंस्तु दण्ड्यः स्याद्रुक्ममाषकम् ॥ रक्षास्वधिकृतैश्चैव प्रदेयं यैर्विलुप्यते ॥ १५७ ॥ कर्षकेभ्योऽर्थमादाय यः कुर्य्यात् कर्मान्यथा ॥ तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ १५८ ॥ ये नियुक्ताः स्वकार्य्येषु हन्युः कार्य्याणि कार्यिणाम् ॥ निर्घृणाः क्रूरमनसः सर्वे कर्म्मापराधिनः ॥ १५९ ॥ धनोष्मणा पच्यमानास्तान् निःस्वान् कारयेन्नृपः ॥ कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ॥ १६० ॥ स्त्रीबालब्राह्मणघ्नांश्च वध्याद्विट्सेविनस्तथा ॥ अमात्यः प्राड्विवाको वा यः कुर्य्यात् कार्य्यमन्यथा ॥१६१॥ तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ ब्रह्मघ्नश्च सुरापश्च तस्करो गुरुतल्पगः ॥१६२॥ एतान् सर्वान्पृथग्विद्यान्महापातकिनो नरान् ॥ महापातकिनो वध्या ब्राह्मणं तु विवासयेत् ॥ १६३ ॥ कृतचिह्नं स्वदेशाच्च शृणु चिह्नाकृतिं ततः ॥ गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥ १६४ ॥ स्तेने तु श्वपदं तद्वद्ब्रह्महत्याशिराः पुमान् ॥ असम्भाष्या ह्यसम्भोज्या असंवाह्या विशेषतः ॥ १६५ ॥ त्यक्तव्याश्च तथा राजञ्ज्ञातिसम्बन्धिबान्धवैः ॥ महापातकिनो वित्तमादाय नृपतिः स्वयम् ॥ १६६ ॥ अप्सु प्रवेशयेद्दण्डं वरुणायोपपादयेत् ॥ सहोढं न विना चोरं घातयेद्धार्म्मिको नृपः ॥ १६७ ॥ सहोढं सोपकरणं घातयेदविचारयन् ॥ ग्रामेष्वपि च ये केचिच्चोराणां भक्ष्यदायकाः॥१६८॥भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥ राष्ट्रेषु राज्ञाधिकृताः सामन्ताश्चैव दूषकाः ॥१६९॥

अभ्यघातेषु मध्यस्थाः क्षिप्रं शास्यास्तु चोरवत् ॥ ग्रामघाते मठाभङ्गे पथि मोषाभिमर्दने ॥ १७० ॥ शक्तितो नाभिधावन्तो निर्वास्याः सप
रिच्छदाः ॥ राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु संस्थितान् ॥ १७१ ॥ अरीणामुपकर्तॄंश्च घातयेद्विविधैर्वधैः ॥ सन्धिं कृत्वा तु ये चौर्यं रात्रौ कुर्वन्ति
तस्कराः ॥ १७२ ॥ तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥ तडागभेदकं हन्यादप्सु शुद्धवधेन तु ॥ १७३ ॥ यस्तु पूर्वं निविष्टं
स्यात्तडागस्योदकं हरेत् ॥ आगमं चाप्यपां भिन्द्यात्स दाप्यः पूर्वशासनम् ॥ १७४ ॥ कोष्ठागारायुधागारदेवागारविभेदकान् ॥ पापान्पापसमाचा
रान्घातयेच्छीघ्रमेव च ॥ १७५ ॥ समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ॥ स हि कार्षापणं दण्ड्यस्तत्त्वमेध्यं च शोधयेत् ॥ १७६ ॥ अजङ्ग
मोऽथवा वृद्धो गर्भिणी बाल एव च ॥ परिभाषणमर्हन्ति न च शोध्यमिति स्थितिः ॥ १७७ ॥ प्रथमं साहसं दण्ड्यो यश्च मिथ्या चिकित्सते ॥
परुषे मध्यमं दण्डमुत्तमं च तथोत्तमे ॥ १७८ ॥ छत्रस्य ध्वजयष्टीनां प्रतिमानां च भेदकाः ॥ प्रतिकुर्युस्ततः सर्वे पंच दण्ड्याः शतानि च ॥ १७९ ॥
अदूषितानां द्रव्याणां दूषणे भेदने तथा ॥ मणीनामपि भेदेन दण्ड्यः प्रथमसाहसम् ॥ १८० ॥ समं च विषमं चैव कुरुते मूल्यतोऽपि वा ॥
समाप्नुयात्स वै पूर्वं दममध्यममेव च ॥ १८१ ॥ बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ॥ कर्षन्तो यत्र दृश्यन्ते विकृताः पापकारिणः ॥ १८२ ॥
प्राकारस्य च भेत्तारं परिखाणां च भेदकम् ॥ द्वाराणां चैव भेत्तारं क्षिप्रं निर्वासयेत्पुरात् ॥ १८३ ॥ मूलकर्माभिचारेषु कर्तव्यो द्विशती
दमः ॥ अबीजविक्रयी यश्च बीजोत्कर्षक एव च ॥ १८४ ॥ मर्यादाभेदकश्चापि विकृतं वधमाप्नुयात् ॥ सर्वसङ्करपापिष्ठं हेमकारं नरा
धिप ॥ १८५ ॥ अन्याये वर्तमानं च च्छेदयेल्लवशः क्षुरैः ॥ द्रव्यमादाय वणिजामनर्घेणावरुन्धताम् ॥ १८६ ॥ द्रव्याणां दूषको यस्तु
प्रतिच्छन्नस्य विक्रयी ॥ मध्यमं प्राप्नुयाद्दण्डं कूटकर्ता तथोत्तमम् ॥ १८७ ॥ राजा पृथक् पृथक् कुर्याद्दण्डं चोत्तमसाहसम् ॥ शास्त्राणां
यज्ञतपसां देशानां क्षेपको नरः ॥ १८८ ॥ देवतानां सतीनां च उत्तमं दण्डमर्हति ॥ एकस्य दंडपारुष्ये बहूनां द्विगुणो दमः ॥ १८९ ॥
कलहो यद्गतो दाप्यो दंडश्च द्विगुणस्ततः ॥ मध्यमं ब्राह्मणं राजा विषयाद्विप्रवासयेत् ॥ १९० ॥ लशुनं च पलाण्डुं च शूकरं ग्रामकुक्कुटम् ॥
तथा पंचनखं सर्वं भक्ष्यादन्यत्तु भक्षयेत् ॥ १९१ ॥ विवासयेत्क्षिप्रमेव ब्राह्मणं विषयात्स्वकात् ॥ अभक्ष्यभक्षणे दण्ड्यः शूद्रो भवति

कृष्णलम् ॥१९२॥ ब्राह्मणक्षत्रियविशां चतुस्त्रिद्विगुणं स्मृतम् ॥ यः साहसं कारयाति स दंडयो द्विगुणं दमम् ॥१९३॥ यस्त्वेवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् ॥ सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकः॥१९४॥ पंचाशत्पणिको दंडस्तत्र कार्यो महीक्षिता ॥ अस्पृश्यं चास्पृशन्नार्यो ह्ययोग्योऽयोग्यकर्मकृत ॥ १९५ ॥ पुंस्त्वहर्त्ता पशूनां च दासीगर्भविनाशकृत् ॥ शूद्रप्रव्रजितानां च देवे पैत्रे च भोजकः ॥१९६॥ अव्रजन् वाढमुक्त्वा तु तथैव च निमन्त्रणे ॥ एते कार्षापणशतं सर्वे दंडया महीक्षिता ॥ १९७ ॥ दुःखोत्पादि गृहे द्रव्यं क्षिपन्दण्डस्तु कृष्णलम् ॥ पितापुत्रविरोधे च साक्षिणां द्विशतो दमः ॥ स्यान्नरश्च तथार्यः स्यात्तस्याप्यष्टशतो दमः ॥ १९८ ॥ तुलाशासनमानानां कूटकृन्मानकस्य च ॥ एभिश्च व्यवहर्त्ता च स दण्डयो दममुत्तमम् ॥१९९॥ विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ॥ विकर्णनासिकां व्योष्ठीं कृत्वा गोभिः प्रमापयेत् ॥२००॥ ग्रामस्य दाहका ये च ये च क्षेत्रस्य वेश्मनः ॥ राजपत्न्यभिगामी च दग्धव्यास्ते कटाग्निना ॥ २०१ ॥ ऊनं वाप्याधिकं चापि लिखेद्यो राजशासनम् ॥ पारदारिकचौरं वा मुंचतो दण्ड उत्तमः ॥२०२॥ अभक्ष्येण द्विजं दूष्य दण्डय उत्तमसाहसम् ॥ क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्द्धकम्॥२०३॥ मृताङ्गलग्नविक्रेतुर्गुरु ताडयतस्तथा॥ राजयानासनारोढुर्दण्ड उत्तमसाहसः॥२०४॥ यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ॥ तमायान्तं पुनर्जित्वा दण्डयेद्द्विगुणं दमम्॥२०५॥ आह्वानकरो मध्यः स्यादनाह्वाने तथाह्वयन् ॥ दण्डिकस्य च यो हस्तादभियुक्तः पलायते॥२०६॥ हीनः पुरुषकारेण तं दण्डयाद्दाण्डिको धनम्॥ प्रेष्यापराधात्प्रेष्यस्तु स दण्डयश्चार्द्धमेव च ॥२०७॥ दण्डार्थे नियमार्थे च नीयमानेषु बन्धनम् ॥ यदि कश्चित्पलायेत दण्डश्चाष्टगुणो भवेत् ॥ २०८॥ अनिन्दिते विवादे तु नखरोमावतारणम्॥ कारयेद्यः स पुरुषो मध्यमं दण्डमर्हति॥२०९॥ बन्धनं चाप्यवध्यस्य बलान्मोचयते तु यः ॥ वध्यं विमोचयेद्यस्तु दण्डाद्द्विगुणभाग्भवेत्॥२१०॥ दुर्दृष्टव्यवहाराणां सभ्यानां द्विगुणो दमः ॥ राज्ञा त्रिंशद्गुणो दण्डः प्रक्षेप्य उदके भवेत् ॥ २११ ॥ अल्पदण्डेऽधिकं कुर्याद्विपुले चाल्पमेव च ॥ ऊनाधिकं तु तं दण्डं सभ्यो दद्यात्स्वकाद्गृहात् ॥ २१२ ॥ यावानवध्यस्य वधे तावान्वध्यस्य रक्षणे ॥ अधर्मो नृपतेर्दृष्टस्तथा वध्यस्य मोक्षणे ॥ २१३ ॥ ब्राह्मणं नैव हन्यात्तु सर्वपापेष्ववस्थितम् ॥ प्रवासयेत्स्वकाद्राष्ट्रात्समग्रधनसंयुतम् ॥ २१४ ॥

न जातु ब्राह्मणं वध्यात्पातकं त्वधिकं भवेत् ॥ यस्मात्तस्मात्प्रयत्नेन ब्रह्महत्यां विवर्जयेत् ॥ २१५ ॥ अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥ अयशो महदाप्नोति नरकं चाधिगच्छति ॥ २१६ ॥ ज्ञात्वापराधं पुरुषस्य राजा कालं तथा चानुमतं द्विजानाम् ॥ दण्ड्येषु दण्ड परिकल्पयेत्तु यो यस्य युक्तः स समीक्ष्य कुर्यात् ॥ २१७ ॥ इति श्रीमात्स्ये महापुराणे राजधर्मे दण्डप्रणयनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ छ ॥ मनुरुवाच ॥ दिव्यान्तरिक्षभौमेषु या शान्तिरभिधीयते ॥ तामहं श्रोतुमिच्छामि महोत्पातेषु केशव ॥ १ ॥ मत्स्य उवाच ॥ अथातः संप्रवक्ष्यामि त्रिविधामद्भुतादिषु ॥ विशेषेण तु भौमेषु शान्तिः कार्या तथा भवेत् ॥ २ ॥ अभया चान्तरिक्षेषु सौम्या दिव्येषु पार्थिव ॥ विजिगीषुः परं राजन्भूतिकामस्तु यो भवेत् ॥ ३ ॥ विजिगीषुः परानेवमभियुक्तस्तथा परैः ॥ तथाभिचारशङ्कायां शत्रूणामभिनाशने ॥ ४ ॥ भये महति सम्प्राप्ते अभया शान्तिरिष्यते ॥ राजयक्ष्माभिभूतस्य क्षतक्षीणस्य चाप्यथ ॥ ५ ॥ सौम्या प्रशस्यते शान्तिर्यज्ञकामस्य चाप्यथ ॥ भूकम्पे च समुत्पन्ने प्राप्ते चान्नक्षये तथा ॥ ६ ॥ अतिवृष्ट्यामनावृष्ट्यां शलभानां भयेषु च ॥ प्रमत्तेषु च चोरेषु वैष्णवी शान्तिरिष्यते ॥ ७ ॥ पशूनां मारणे प्राप्ते नराणामपि दारुणे ॥ भूतेषु दृश्यमानेषु रौद्री शान्तिस्तथेष्यते ॥ ८ ॥ वेदनाशे समुत्पन्ने जने जाते च नास्तिके ॥ अपूज्यपूजने जाते ब्राह्मी शान्तिस्तथेष्यते ॥ ९ ॥ भविष्यत्यभिषेके च परचक्रभयेऽपि च ॥ स्वराष्ट्रभेदेऽरिवधे रौद्री शान्तिः प्रशस्यते ॥ १० ॥ त्र्यहातिरिक्ते पवने भक्ष्ये सर्वविगर्हिते ॥ वैकृते वातजे व्याधौ वायवी शान्तिरिष्यते ॥ ११ ॥ अनावृष्टिभये जाते प्राप्ते विकृतिवर्षणे ॥ जलाशयविकारेषु वारुणी शान्तिरिष्यते ॥ १२ ॥ अभिशापभये प्राप्ते भार्गवी च तथैव च ॥ जाते प्रसववैकृत्ये प्राजापत्या महाभुज ॥ १३ ॥ उपस्कराणां वैकृत्ये त्वाष्ट्री पार्थिवनन्दन ॥ बालानां शान्तिकामस्य कौमारी च तथा नृप ॥ १४ ॥ कुर्याच्छान्तिमथाग्नेयीं संप्राप्ते वह्निवैकृते ॥ आज्ञाभङ्गे तु सञ्जाते तथा भृत्यादिसंक्षये ॥ १५ ॥ अश्वानां शान्तिकामस्य तद्विकारे समुत्थिते ॥ अश्वानां कामयानस्य गान्धर्वी शान्तिरिष्यते ॥ १६ ॥ गजानां शान्तिकामस्य तद्विकारे समुत्थिते ॥ गजानां कामयानस्य शान्तिराङ्गिरसी भवेत् ॥ १७ ॥ पिशाचादिभये जाते शान्तिर्वै नैर्ऋती स्मृता ॥ अपमृत्युभये जाते दुःस्वप्ने च तथा स्थिते ॥ १८ ॥ याम्यां तु कारये

च्छान्ति प्राप्ते तु नरके तथा ॥ धननाशे समुत्पन्ने कौबेरी शान्तिरिष्यते ॥ १९ ॥ वृक्षाणां च तथार्थानां वैकृते समुपस्थिते॥ भूतिकामस्तथा शान्ति पार्थिवीं प्रतियोजयेत् ॥ २० ॥ प्रथमे दिनयामे च रात्रौ वा मनुजोत्तम ॥ हस्ते स्वातौ च चित्रायामादित्ये चाश्विने तथा ॥ २१ ॥ अर्यम्णि सौम्यजातेषु वायव्यांत्वद्भुतेषु च ॥ द्वितीये दिनयामे तु रात्रौ च रविनन्दन ॥ २२ ॥ पुष्याग्नेये विशाखासु पित्र्यासु भरणीषु च ॥ उत्पातेषु तथा भाग्ये आग्नेयीं तेषु कारयेत् ॥ २३ ॥ तृतीये दिनयामे च रात्रौ च रविनन्दन ॥ रोहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदैवते॥२४॥ ज्येष्ठायां च तथा मैत्रे ये भवन्त्यद्भुताः क्वचित् ॥ ऐन्द्री तेषु प्रयोक्तव्या शान्ती रविकुलोद्वह ॥२५॥ चतुर्थे दिनयामे च रात्रौ वा रविनन्दन ॥ सार्पे पौष्णे तथार्द्रायामहिर्बुध्न्ये च दारुणे ॥२६॥ मूले वारुणदैवत्ये ये भवन्त्यद्भुतास्तथा॥ वारुणी तेषु कर्तव्या महाशान्तिर्महीक्षिता॥२७॥ मित्रमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् ॥ तत्र शान्तिद्वयं कार्यं निमित्तेषु च नान्यथा ॥ निर्निमित्तकृता शान्तिर्निमित्तेनोपयुज्यते ॥२८॥ बाणप्रहारा न भवन्ति यद्वद्राजन् नृणां सन्नहनैर्युतानाम् ॥ देवोपघाता न भवन्ति तद्वद्धर्मात्मनां शान्तिपरायणानाम् ॥ २९ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तिर्नामाष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ ७ ॥ मनुरुवाच ॥ अद्भुतानां फलं देव शमनं च तथा वद ॥ त्वं हि वेत्सि विशालाक्ष ज्ञेयं सर्वमशेषतः ॥ १ ॥ मत्स्य उवाच ॥ अत्र ते वर्णयिष्यामि यदुवाच महातपाः ॥ अत्रये वृद्धगर्गस्तु सर्वधर्मभृतां वरः ॥ २ ॥ सरस्वत्यां सुखासीनं गर्गं स्रोतसि पार्थिव ॥ पप्रच्छासौ महातेजा अत्रिर्मुनिजनप्रियम् ॥ ३ ॥ अत्रिरुवाच ॥ नश्यतां पूर्वरूपाणि जनानां कथयस्व मे ॥ नगराणां तथा राज्ञां त्वं हि सर्वं वदस्व माम् ॥ ४ ॥ गर्ग उवाच ॥ पुरुषापचाराान्नियतमपरज्यन्ति देवताः ॥ ततोऽपरागाद्देवानामुपसर्गः प्रवर्तते ॥ ५ ॥ दिव्यान्तरिक्षभौमं च त्रिविधं संप्रकीर्तितम् ॥ ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ॥ ६ ॥ उल्कापातो दिशां दाहः परिवेषस्तथैव च ॥ गन्धर्वनगरं चैव वृष्टिश्च विकृता [illegible] या ॥ ७ ॥ एवमादीनि लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत् ॥ चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः॥८ ॥ जलाशयानां वैकृत्यं भौमं तदपि कीर्तितम् ॥ भौमे त्वल्पफलं ज्ञेयं चिरेण च विपच्यते॥९॥ अभ्रजं मध्यफलदं मध्यकालफलप्रदम् ॥ अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ॥१०॥सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं

निष्फलं भवेत् ॥ अद्भुतस्य विपाकश्च विना शान्त्या न दृश्यते ॥ ११ ॥ त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद्भयकारकम् ॥ राज्ञः शरीरे लोके च पुरद्वारे पुरोहिते ॥ १२ ॥ पाकमायाति पुत्रेषु तथा वै कोशवाहने ॥ ऋतुस्वभावाद्राजेन्द्र भवन्त्यद्भुतसंज्ञिताः ॥ १३ ॥ शुभावहास्ते विज्ञेयास्तांश्च मे गदतः शृणु ॥ वज्राशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः ॥ १४ ॥ परिवेषरजोधूमरक्तार्कास्तमयोदयाः ॥ द्रुमोद्भेदकरस्नेहो बहुशः सफलद्रुमः ॥ १५ ॥ गोपक्षिमधुवृद्धिश्च शुभानि मधुमाधवे ॥ ऋक्षोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ॥ १६ ॥ कृष्णश्वेतं तथा पीतं धूसरध्वान्तलोहितम् ॥ रक्तपुष्पारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् ॥ १७ ॥ सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ शक्रायुधपरीवेषं विद्युदुल्काविरोहणम् ॥ १८ ॥ कंपोद्वर्त्तनवैकृत्यं हसनं दारणं क्षितेः ॥ नद्योदपानसरसां विधूनतरणप्लवाः ॥ १९ ॥ शृङ्गिणां च वराहाणां वर्षासु शुभमिष्यते ॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ॥ २० ॥ रक्षोभूतपिशाचानां दर्शनं वागमानुषी ॥ दिशो धूमान्धकाराश्च सनभोवनपर्वताः ॥ २१ ॥ उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥ दिव्यस्त्रीरूपगन्धर्वविमानाद्भुतदर्शनम् ॥ २२ ॥ ग्रहनक्षत्रताराणां दर्शनं वागमानुषी ॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु ॥ २३ ॥ शस्यवृद्धी रसोत्पत्तिः शरत्काले शुभाः स्मृताः ॥ हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ॥ २४ ॥ कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥ चित्रगर्भोद्भवः स्त्रीषु गोऽजाश्वमृगपक्षिषु ॥ पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः ॥ २५ ॥ ऋतुस्वभावेन विनाद्भुतस्य जातस्य दृष्टस्य तु शीघ्रमेव ॥ यथागमं शान्तिरनन्तरं तु कार्या यथोक्ता वसुधाधिपेन ॥ २६ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तिकोत्पत्तिर्नामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥२२९॥ गर्ग उवाच ॥ देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ॥ वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम् ॥ १ ॥ आरटन्ति रुदन्त्येताः प्रस्विद्यन्ति हसन्ति च ॥ उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति धमन्ति च ॥ २ ॥ भुञ्जते विक्षिपन्ते वा कोशप्रहरणध्वजान् ॥ अवाङ्मुखा वै भवन्ति स्थानात्स्थानं भ्रमन्ति च ॥ ३ ॥ एवमाद्या हि दृश्यन्ते विकाराः सहसोत्थिताः ॥ लिङ्गायतनविप्रेषु तत्र वासं न रोचयेत् ॥ ४ ॥ राज्ञो वा व्यसनं तत्र स च देशो विनश्यति ॥ देवयात्रासु चोत्पातान्दृष्ट्वा देशभयं वदेत् ॥ ५ ॥ पितामहस्य हर्म्येषु

तत्र वासं न रोचयेत् ॥ पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम्॥६॥ ज्ञेयं सेनापतीनां तु यत्स्यात्स्कन्दविशाखजम्॥ लोकानां विष्णुवस्वीन्द्रविश्वकर्म्मसमुद्भवम् ॥ ७ ॥ विनायकोद्भवं ज्ञेयं गणानां ये तु नायकाः ॥ देवप्रेष्यान्नृपप्रेष्या देवस्त्रीभिर्नृपस्त्रियः ॥ ८ ॥ वासुदेवोद्भवं ज्ञेयं ग्रहाणामेव नान्यथा ॥ देवतानां विकारेषु श्रुतिवेत्ता पुरोहितः ॥ ९॥ देवतार्चां तु गत्वा वै स्नानमाच्छाद्य भूषयेत् ॥ पूजयेच्च महाभाग गन्धमाल्यान्नसम्पदा ॥ १० ॥ मधुपर्केण विधिवदुपतिष्ठेदनन्तरम् ॥ पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतन्द्रितः ॥ ११ ॥ विप्राश्च पूज्या मधुरान्नपानैः सदक्षिणं सप्तदिनं नरेन्द्र ॥ प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः सकाञ्चनैः शांतिमुपैति पापम् ॥ १२ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशांतावर्चाधिकारो नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥ छ ॥ गर्ग उवाच ॥ अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः॥ न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते नृपैः ॥ १ ॥ प्रज्वलेदप्सु मांसं वा तथार्द्रं वापि किञ्चन ॥ प्राकारं तोरणं द्वारं नृपवेश्म सुरालयम् ॥ २ ॥ एतानि यत्र दीप्यंते तत्र राज्ञो भयं भवेत् ॥ विद्युता वा प्रदह्यन्ते तदापि नृपतेर्भयम् ॥ ३ ॥ अनेशानि तमांसि स्युर्विना पांसुरजांसि च ॥ धूमश्चानग्निजो यत्र तत्र विन्द्यान्महाभयम् ॥ ४ ॥ तडित्त्वनभ्रे गगने भयं स्याद्दक्षवर्जिते ॥ दिवा सतारे गगने तथैव भयमादिशेत् ॥ ५ ॥ ग्रहनक्षत्रवैकृत्ये ताराविषमदर्शने ॥ पुरवाहनयानेषु चतुष्पान्मृगपक्षिषु ॥ ६ ॥ आयुधेषु च दीप्तेषु धूमायत्सु तथैव च ॥ निर्गमत्सु च कोशाच्च संग्रामस्तुमुलो भवेत् ॥ ७ ॥ विनाग्निं विष्फुलिङ्गाश्च दृश्यंते यत्र कुत्रचित् ॥ स्वभावाच्चापि पूर्यंते धनूंषि विकृतानि च ॥ ८ ॥ विकाराश्चायुधानां स्यात् तत्र संग्राममादिशेत् ॥ त्रिरात्रोपोषितश्चात्र पुरोधाः सुसमाहितः ॥ ९ ॥ समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च ॥ होमं कुर्य्यादग्निमन्त्रैर्ब्राह्मणांश्चैव भोजयेत् ॥ १० ॥ दद्यात् सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च ॥ एवं कृते पापमुपैति नाशं यदग्निवैकृत्यभवं द्विजेन्द्र ॥ ११ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशांतावग्निवैकृत्यं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ छ ॥ गर्ग उवाच ॥ पुरेषु येषु दृश्यंते पादपा देवचोदिताः ॥ रुदंतो वा हसंतो वा स्रवंतो वा रसान्बहून् ॥ १ ॥ अरोगा वा विना वातं शाखां मुंचन्त्यथ द्रुमाः ॥ फलं मूलं तथा कालं दर्शयंति त्रिहायनाः ॥ २ ॥ पूर्ववत्स्वं दर्शयंति फलं पुष्पं तथान्तरे ॥ क्षीरं स्नेहं तथा रक्तं मधु तोयं

स्रवंति च ॥ ३ ॥ शुष्यन्त्यरोगाः सहसा शुष्का रोहंति वा पुनः ॥ उत्तिष्ठंतीह पतिताः पतंति च तथोत्थिताः ॥ ४ ॥ तत्र वक्ष्यामि ते ब्रह्मन् विपाकं फलमेव च ॥ रोदने व्याधिमभ्योति हसने देशविभ्रमम् ॥ ५ ॥ शाखाप्रपतनं कुर्यात्संग्रामे योधपातनम् ॥ बालानां मरणं कुर्याद्द्बालानां बालपुष्पिता ॥ ६ ॥ स्वराष्ट्रभेदं कुरुते फलपुष्पमथांतरे ॥ क्षयः सर्वत्र गोक्षीरे स्नेहे दुर्भिक्षलक्षणम् ॥ ७ ॥ वाहनापचयं मद्ये रक्ते संग्राममादिशेत् ॥ मधुस्रावे भवेद्व्याधिर्जलस्रावे न वर्षति ॥ ८ ॥ अरोगशोषणं ज्ञेयं ब्रह्मन्दुर्भिक्षलक्षणम् ॥ शुष्केषु सम्प्ररोहस्तु वीर्यमन्नं च हीयते ॥ ९ ॥ उत्थाने पतितानां च भयं भेदकरं भवेत् ॥ स्थानात्स्थानं तु गमने देशभङ्गस्तथा भवेत् ॥ १० ॥ ज्वलत्स्वपि च वृक्षेषु रुदत्स्वपि धनक्षयम् ॥ एतत्पूजितवृक्षेषु सर्वं राज्ञो विपद्यते ॥ ११ ॥ पुष्पे फले वा विकृते राज्ञो मृत्युं तथादिशेत् ॥ अन्येषु चैव वृक्षेषु वृक्षोत्पातेष्वतन्द्रितः ॥ १२ ॥ आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् ॥ वृक्षोपरि तथा च्छत्रं कुर्यात्पापप्रशान्तये ॥ १३ ॥ शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् ॥ रुद्रेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः ॥ १४ ॥ मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् ॥ गीतेन नृत्येन तथार्चयेत्तु देवं हरं पापविनाशहेतोः ॥ १५ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशांतौ वृक्षोत्पातप्रशमनंनाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ छ ॥ गर्ग उवाच ॥ अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं मतम् ॥ अनृतौ तु दिवानन्ता वृष्टिर्ज्ञेया भयानका ॥ १ ॥ अनभ्रे वैकृताचैव विज्ञेया राजमृत्यवे ॥ शीतोष्णानां विपर्यासे नृपाणां रिपुजं भयम् ॥ २ ॥ शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ॥ अङ्गारपांसुवर्षेषु नगरं तद्विनश्यति ॥ ३ ॥ मज्जास्थिस्नेहमांसानां जनमारभयं भवेत् ॥ फलं पुष्पं तथा धान्यं परेणातिभयाय तु ॥ ४ ॥ पांशुजन्तूपलानां च वर्षतो रोगजं भयम् ॥ छिद्रे वाभ्रप्रवर्षेण सस्यानां भीतिवर्द्धनम् ॥ ५ ॥ विरजस्के रवौ व्यभ्रे यदा च्छाया न दृश्यते ॥ दृश्यते तु प्रतीपा वा तत्र देशभयं भवेत् ॥ ६ ॥ निरभ्रे वाथ रात्रौ वा श्वेतं याम्योत्तरेण तु ॥ इन्द्रायुधं तथा दृष्ट्वा उल्कापातं तथैव च ॥ ७ ॥ दिग्दाहपरिवेषौ च गन्धर्वनगरं तथा ॥ परचक्रभयं ब्रूयाद्देशोपद्रवमेव च ॥ ८ ॥ सूर्येन्दुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवद्द्विजेन्द्र ॥ धनानि गोः कांचनदक्षिणा च देया द्विजानामघनाशहेतोः ॥ ९ ॥ इति श्रीमात्स्ये

महापुराणेऽद्भुतशान्तौ वृष्टिवैकृतिप्रशमनं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥ छ ॥ गर्ग उवाच ॥ नगरादपसर्पन्ते समीपमुपयान्ति च ॥ नद्यो ह्रदप्रस्रवाणि विरसाश्च भवन्ति च ॥ १ ॥ विवर्णं कलुषं तप्तं फेनवज्जन्तुसङ्कुलम् ॥ स्नेहं क्षीरं सुरां रक्तं वहन्ते वाकुलोदकाः ॥ २ ॥ षण्मासाभ्यन्तरे तत्र परचक्रभयं भवेत् ॥ जलाशया नदंते वा प्रज्वलन्ति कथंचन ॥ ३ ॥ विमुंचन्ति तथा ब्रह्मञ्ज्वालाधूमरजांसि च ॥ अखाते वा जलोत्पत्तिः सुसत्त्वा वा जलाशयाः ॥ ४ ॥ सङ्गीतशब्दाः श्रूयन्ते जनमारभयं भवेत् ॥ दिव्यमम्भोमयं सर्पिर्मधुतैलावसेचनम् ॥ ५ ॥ जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत् ॥ ६ ॥ मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विजभोजनार्थम् ॥ गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुम्भाः सलिलापशान्त्यै ॥ ७ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ सलिलाशयवैकृत्यं नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥छ॥ गर्ग उवाच॥अकालप्रसवा नार्यः कालातीतप्रजास्तथा ॥ विकृतप्रसवाश्चैव युग्मसंप्रसवास्तथा ॥ १॥ अमानुषा ह्यतुण्डाश्च सञ्जातव्यसनास्तथा ॥ हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥ २ ॥ पशवः पक्षिणश्चैव तथैव च सरीसृपाः ॥ विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ ३ ॥ विवासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ॥ कुर्य्याच्च्छ्वैर्ब्राह्मणतर्पणं च लोके ततः शान्तिमुपैति पापम् ॥ ४ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ स्त्रीप्रसववैकृत्यं नाम पंचत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥ छ ॥ गर्ग उवाच ॥ यान्ति यानान्ययुक्तानि युक्तान्यपि न यान्ति च ॥ चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितम् ॥ १ ॥ वाद्यमाना न वाद्यन्ते वाद्यन्ते चात्यनाहताः ॥ अचलाश्च चलन्त्येव न चलन्ति चलानि च ॥ २ ॥ आकाशे तूर्यनादश्च गीतगन्धर्वनिःस्वनः ॥ काष्ठदर्वीकुठारादि विकारं कुरुते यदि ॥ ३ ॥ गावो लांगूलसङ्गश्च स्त्रियः स्त्री च विघातयेत्॥ उपस्कारादिविकृतौ घोरं शस्त्रभयं भवेत् ॥ ४ ॥ वायोस्तु पूजां द्विज सक्तुभिश्च कृत्वा नियुक्तांश्च जपेच्च मन्त्रान् ॥ दद्यात्प्रभूतं परमान्नमत्र सदक्षिणं तेन शमोऽस्य भूयात् ॥५॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावुपस्करवैकृत्यं नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः॥२३६॥ गर्ग उवाच ॥ प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः ॥ अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः ॥ १ ॥ स्थलजाश्च जलं

यान्ति घोरं वाशन्ति निर्भयाः ॥ राजद्वारे पुरद्वारे शिवा चाप्याशिवप्रदा ॥ २॥ दिवा रात्रिश्चरा वापि रात्रावपि दिवाचराः ॥ ग्राम्यास्त्यजन्ति ग्रामं च शून्यतां तस्य निर्दिशेत् ॥ ३ ॥ दीप्ता वाशन्ति सन्ध्यासु मण्डलानि च कुर्वते ॥ वाशन्ति विस्वरं यत्र तदाप्येतत्फलं लभेत् ॥ ४ ॥ प्रदोषे कुक्कुटो वाशेद्धेमन्ते वापि कोकिलः ॥ अर्कोदयेऽर्काभिमुखी शिवा रौति भयं वदेत् ॥५॥ गृहं कपोतः प्रविशेत्क्रव्यादो मूर्ध्नि लीयते ॥ मधु वा मक्षिकाः कुर्युर्मृत्युर्गृहपतेर्भवेत् ॥ ६ ॥ प्राकारद्वारगेहेषु तोरणापणवीथिषु ॥ केतुच्छत्रायुधाद्येषु क्रव्यादं प्रपतेद्यदि ॥ ७ ॥ जायन्ते वाथ वल्मीका मधु वा स्यन्दते यदि ॥ स देशो नाशमायाति राजा च म्रियते तथा ॥ ८ ॥ मूषकाश्छलभान्दष्ट्वा प्रभूतं क्षुद्भयं भवेत् ॥ काष्ठोल्मुकास्थिशृङ्गाढ्याः श्वानो मर्कटवेदनाः ॥९॥ दुर्भिक्षवेदना ज्ञेया काका धान्यमुखा यदि॥ जनानभिभवन्तीह निर्भया रणवेदिनः ॥ १० ॥ काको मैथुनसक्तश्च श्वेतस्तु यदि दृश्यते ॥ राजा वा म्रियते तत्र स च देशो विनश्यति ॥ ११ ॥ उलूको दृश्यते यत्र नृपद्वारे तथा गृहे ॥ ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥ १२ ॥ मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ॥ देवाः कपोता इति वा जप्तव्याः पंचभि र्द्विजैः ॥ १३ ॥ गावश्च देया विधिवद्द्विजानां सकांचना वस्त्रयुगोत्तरीयाः ॥ एवं कृते शान्तिमुपैति पापं मृगैर्द्विजैर्वा विनिवेदितं यत् ॥ १४ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ मृगपक्षिवैकृत्यं नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥ छ ॥ गर्ग उवाच ॥ प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ॥ निर्निमित्तं तु पतनं दृढानां राजमृत्यवे ॥ १ ॥ रजसा वाथ धूमेन दिशो यत्र समाकुलाः ॥ आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये ॥ २ ॥ राक्षसा यत्र दृश्यन्ते ब्राह्मणाश्च विधर्म्मिणः ॥ ऋतवश्च विपर्य्यस्ता अपूज्यः पूज्यते जनैः ॥३ ॥ नक्षत्राणि वियोगीनि तन्महद्भयलक्षणम् ॥ केतूदयोपरागौ च च्छिद्रं वा शशिसूर्ययोः ॥ ४ ॥ ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ॥ स्त्रियश्च कलहायन्ते बाला निघ्नन्ति बालकान् ॥ ५ ॥ क्रियाणामुचितानां च विच्छित्तिर्यत्र जायते ॥ हूयमानस्तु यत्राग्निर्दीप्यते न च शान्तिषु ॥ ६ ॥ पिपीलिकाश्च क्रव्यादा यान्ति चोत्तरतस्तथा ॥ पूर्णकुम्भाः स्रवन्ते च हविर्वा विप्रलुप्यते ॥ ७॥ मङ्गल्याश्च गिरो यत्र न श्रूयन्ते समन्ततः॥ क्षवथुर्बाधते वाथ प्रहसन्ति नदन्ति च ॥ ८ ॥ न च देवेषु वर्त्तन्ते यथावद्ब्राह्मणेषु च ॥ मन्दघोषाणि वाद्यानि वाद्यन्ते विस्वराणि च ॥ ९ ॥

गुरुमित्रद्विषो यत्र शत्रुपूजारता नराः ॥ ब्राह्मणान्सुहृदा मान्याञ्जनो यत्रावमन्यते ॥ १० ॥ शान्तिमङ्गलहोमेषु नास्तिक्यं यत्र जायते ॥ राजा वा म्रियते तत्र स देशो वा विनश्यति ॥ ११ ॥ राज्ञो विनाशे सम्प्राप्ते निमित्तानि निबोध मे ॥ ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ १२ ॥ ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ॥ न च स्मरति कृत्येषु याचितश्च प्रकुप्यति ॥१३॥ रमते निन्दया तेषां प्रशंसां नाभिनन्दति ॥ अपूर्वं तु करं लोभात्तथा पातयते जने ॥ १४॥ एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तम ॥ भोज्यानि चैव कार्याणि सुराणां बलयस्तथा ॥ सन्तो विप्राश्च पूज्याः स्युस्तेभ्यो दानं च दीयताम् ॥ १५ ॥ गावश्च देया द्विजपुङ्गवेभ्यो भुवस्तथा काञ्चनमम्बराणि ॥ होमश्च कार्योऽमरपूजनं च एवं कृते पापमुपैति शान्तिम् ॥ १६ ॥ इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावुत्पातप्रशमनं नामाष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ छ ॥ मनुरुवाच ॥ ग्रहयज्ञः कथं कार्यो लक्षहोमः कथं नृपैः ॥ कोटिहोमोऽपि वा देव सर्वपापप्रणाशनः ॥ १ ॥ क्रियते विधिना येन यद्दृष्टं शान्तिचिन्तकैः ॥ तत्सर्वं विस्तरादेव कथयस्व जनार्दन ॥ २ ॥ मत्स्य उवाच ॥ इदानीं कथयिष्यामि प्रसङ्गादेव ते नृप ॥ राज्ञां धर्मप्रसक्तेन प्रजानां च हितेप्सुना ॥३॥ ग्रहयज्ञः सदा कार्यो लक्षहोमसमन्वितः ॥ नदीनां सङ्गमे चैव सुराणामग्रतस्तथा ॥ ४ ॥ सुषमे भूमिभागे च देवज्ञाधिष्ठितो नृपः ॥ गुरुणा चैव ऋत्विग्भिः सार्द्धं भूमिं परीक्षयेत् ॥ ५ ॥ खनेत्कुण्डं च तत्रैव सुषमं हस्तमात्रकम् ॥ द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणम् ॥ ६ ॥ युग्मास्तु ऋत्विजः प्रोक्ता अष्टौ वै वेदपारगाः ॥ कन्दमूलफलाहारा दधिक्षीराशिनोऽपि वा ॥ ७ ॥ वेद्यां निधापयेच्चैव रत्नानि विविधानि च ॥ सिकतापरिवेषाश्च ततोऽग्निं च समिन्धयेत् ॥ ८ ॥ गायत्र्या दशसाहस्रं मानस्तोकेन षड्गुणः ॥ त्रिंशद्ब्रह्मादिमन्त्रैश्च चत्वारो विष्णुदैवतैः ॥ ९ ॥ कूष्माण्डैर्जुहुयात्पंच कुसुमाद्यैस्तु षोडश ॥ होतव्या दशसाहस्रं बादरैर्जातवेदसि ॥ १० ॥ श्रियो मन्त्रेण होतव्याः सहस्राणि चतुर्दश ॥ शेषाः पंचसहस्रास्तु होतव्यास्त्विन्द्रदैवतैः ॥ ११ ॥ हुत्वा शतसहस्रं तु पुण्यस्नानं समाचरेत् ॥ कुम्भैः षोडशसंख्यैश्च सहिरण्यैः सुमङ्गलैः ॥ १२ ॥ स्नापयेद्यजमानं तु ततः शान्तिर्भविष्यति ॥ एवं कृते तु यत्किंचिद्ग्रहपीडासमुद्भवम् ॥ १३ ॥ तत्सर्वं नाशमायाति दत्त्वा वै दक्षिणां नृप ॥ तस्मात्सर्वप्रयत्नेन

प्रधाना दक्षिणा स्मृता ॥ १४ ॥ हस्त्यश्वरथयानानि भूमिवस्त्रयुगानि च ॥ अनडुद्गोशतं दद्यादृत्विजां चैव दक्षिणाम् ॥ १५ ॥ यथा विभवसारं तु वित्तशाठ्यं न कारयेत् ॥ मासे पूर्णे समाप्तस्तु लक्षहोमो नरा ॥ १६ ॥ लक्षहोमस्य गजेन्द्र विधानं परिकीर्त्तितम् ॥ इदानीं कोटिहोमस्य शृणु त्वं कथयाम्यहम् ॥ १७ ॥ गङ्गातटेऽथ यमुनासरस्वत्योर्नरेश्वर ॥ नर्मदादेविकायास्तु तटे होमो विधीयते ॥ १८ ॥ तत्रापि ऋत्विजः कार्या रविनन्दन षोडश ॥ सर्वहोमे तु राजर्षे दद्याद्विप्रेऽथवा धनम् ॥ १९ ॥ ऋत्विगाचार्यसहितो दीक्षां सांवत्सरीं स्थितः ॥ चैत्रे मासे तु सम्प्राप्ते कार्त्तिके वा विशेषतः ॥ २० ॥ प्रारम्भः करणीयो वा वत्सरं वत्सरं नृप ॥ यजमानः पयोभक्षी फलाशी च तथाऽनघ ॥ २१ ॥ यवाद्व्रीहयो माषास्तिलाश्च सह सर्षपैः ॥ पालाशाः समिधः शस्ता वसोर्धारा तथोपरि ॥ २२ ॥ मासेऽथ प्रथमे दद्यादृत्विग्भ्यः क्षीरभोजनम् ॥ द्वितीये कृसरां दद्याद्धर्मकामार्थसाधनीम् ॥ २३ ॥ तृतीये मासि संयावो देयो वै रविनन्दन ॥ चतुर्थे मोदका देया विप्राणां प्रीतिमावहन् ॥ २४ ॥ पंचमे दधिभक्तं तु षष्ठे वै सक्तुभोजनम् ॥ पूपाश्च सप्तमे देया ह्यष्टमे घृतपूपकाः ॥ २५ ॥ षष्टचोदनं च नवमे दशमे यवषष्टिका ॥ एकादशे समाषं तु भोजनं रविनन्दन ॥ २६ ॥ द्वादशे त्वथ सम्प्राप्ते मासे रविकुलोद्वह ॥ षड्रसैः सह भक्ष्यैश्च भोजनं सार्वकामिकम् ॥ २७ ॥ देया द्विजानां राजेंद्र मासि मासि च दक्षिणाः ॥ अहतवासाः संवीतो दिनार्द्धे होमयेच्छुचिः ॥२८॥ तस्मात् सदोत्थितैर्भाव्यं यजमानैः सह द्विजैः ॥ इन्द्राद्यादिसुराणां च प्रीणनं सार्वकामिकम् ॥ २९ ॥ कृत्वा सुराणां राजेंद्र पशुघातसमन्वितम् ॥ सर्वदानानि देवानामग्निष्टोमं च कारयेत् ॥ ३० ॥ एवं कृत्वा विधानेन पूर्णाहुतिः शते शते ॥ सहस्रे द्विगुणा देया यावच्छतसहस्रकम् ॥ ३१ ॥ पुरोडाशस्ततः साध्यो देवतार्थं च ऋत्विजैः ॥ युक्तो वसन् मानवैश्च पुनः प्रातर्च्चनान् द्विजान् ॥ ३२ ॥ प्रीणयित्वा सुरान् सर्वान् पितृनेव ततः क्रमात् ॥ कृत्वा शास्त्रविधानेन पिण्डानां च समर्पणम् ॥ ३३ ॥ समाप्तौ तस्य होमस्य विप्राणामथ दक्षिणाम् ॥ समां चैव तुलां कृत्वा बद्धा शिक्यद्वयं पुनः ॥ ३४ ॥ आत्मानं तोलयेत् तत्र पत्नीं चैव द्वितीयकाम् ॥ सुवर्णेन तथात्मानं रजतेन तथा प्रियाम् ॥ ३५ ॥ तोलयित्वा ददेद्राजा वित्तशाठ्यविवर्जितः ॥ ददेच्छतसहस्रं तु रूप्यस्य कनकस्य च ॥ ३६ ॥ सर्वस्वं वा ददेत् तत्र

राजसूयफलं लभेत् ॥ एवं कृत्वा विधानेन विप्रांस्तांश्च विसर्जयेत् ॥ ३७ ॥ प्रीयतां पुण्डरीकाक्षः सर्वयज्ञेश्वरो हरिः ॥ तस्मिंस्तुष्टे जगत् तुष्टं प्रीणिते प्रीणितं भवेत् ॥ ३८ ॥ एवं सर्वोपघाते तु देवमानुषकारिते ॥ इयं शान्तिस्तवाख्याता यां कृत्वा सुकृती भवेत् ॥ ३९ ॥ न शोचेज्जन्ममरणे कृताकृतविचारणे ॥ सर्वतीर्थेषु यत्स्नानं सर्वयज्ञेषु यत्फलम् ॥ तत्फलं समवाप्नोति कृत्वा यज्ञत्रयं नृप ॥ ४० ॥ इति श्रीमात्स्ये महापुराणे ग्रहयज्ञविधानं नामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥ छ ॥ मनुरुवाच ॥ इदानीं सर्वधर्मज्ञ सर्वशास्त्रविशारद ॥ यात्राकालविधानं मे कथयस्व महीक्षिताम् ॥१॥ मत्स्य उवाच ॥ यदा मन्येत नृपतिराक्रन्देन बलीयसा ॥ पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत् ॥२॥योधान्मत्वा प्रभूतांश्च प्रभूतं च बलं मम ॥ मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत् ॥३॥अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत्॥पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य च व्रजेत् ॥४॥ चैत्र्यां वा मार्गशीर्ष्यां वा यात्रां यायान्नराधिपः ॥ चैत्र्यां पश्येच्च नैदाघं हन्ति पुष्टिं च शारदीम् ॥ ५ ॥ एतदेव विपर्यस्तं मार्गशीर्ष्यां नराधिपः ॥ शत्रोर्वा व्यसने यायात्काल एव सुदुर्लभः ॥ ६ ॥ दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम् ॥ षडृक्षपीडासंततं पीडितं च तथा ग्रहैः ॥ ७ ॥ ज्वलन्ती च तथैवोल्का दिशं यां च प्रपद्यते ॥ भूकम्पोल्का दिशं याति यां च केतुः प्रसूयते ॥ ८ ॥ निर्घातश्च पतेद्यत्र तां यायाद्वसुधाधिपः ॥ स बलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥ ९ ॥ सम्भूतान्तरकोपं च क्षिप्रं प्रायादरिं नृपः ॥ यूकामाक्षीकबहुलं बहुपङ्कं तथाविलम् ॥ १० ॥ नास्तिकं भिन्नमर्यादं तथाऽमंगलवादिनम् ॥ अपेतप्रकृतिं चैव निःसारं च तथा जयेत् ॥ ११ ॥ विद्विष्टनायकं सैन्यं तथा भिन्नं परस्परम् ॥ व्यसनासक्तनृपतिं बलं राजाभियोजयेत् ॥ १२ ॥ सैनिकानां न शस्त्राणि स्फुरन्त्यङ्गानि यत्र च ॥ दुःस्वप्नानि च पश्यन्ति बलं तदभियोजयेत् ॥ १३ ॥ उत्साहबलसम्पन्नः स्वानुरक्तबलस्तथा ॥ तुष्टपुष्टबलो राजा परानभिमुखो व्रजेत् ॥ १४ ॥ शरीरस्फुरणे धन्ये तथा दुःस्वप्ननाशने ॥ निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥ १५ ॥ ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च ॥ प्रश्नकाले शुभे जाते परान्यायान्नराधिपः ॥ १६ ॥ एवं तु दैवसपन्नस्तथा पौरुषसंयुतः ॥ देशकालोपपन्नां तु यात्रां कुर्यान्नराधिपः ॥ १७ ॥ स्थले नक्रस्तु

नागस्य तस्यापि सजले वशे ॥ उलूकस्य निशि ध्वांक्षः स च तस्य दिवा वशे ॥ १८ ॥ एवं देशं च कालं च ज्ञात्वा यात्रां प्रयोजयेत् ॥ पदातिनागबहुलां सेनां प्रावृषि योजयेत् ॥१९॥ हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ॥ खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः ॥२०॥ चतुरङ्गबलोपेतां वसन्ते वा शरद्यथ ॥ सेना पदातिबहुला यस्य स्यात्पृथिवीपतेः ॥ २१ ॥ अभियोज्या भवेत्तेन शत्रुर्विषममाश्रितः ॥ गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च ॥२२॥ किंचित्पङ्के तथा यायाद्बहुनागो नराधिपः ॥ रथाश्वबहुलो यायाच्छत्रुं समपथस्थितम् ॥ २३ ॥ तमाश्रयन्तो बहुलास्तांस्तु राजा प्रपूजयेत् ॥ खरोष्ट्रबहुलो राजा शत्रुर्बन्धेन संस्थितः ॥ २४ ॥ बन्धनस्थोऽभियोज्योऽरिस्तथा प्रावृषि भूभुजा ॥ हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत् ॥ २५ ॥ यवसेन्धनसंयुक्तः कालः पार्थिव हैमनः ॥ शरद्वसन्तौ धर्मज्ञ कालौ साधारणौ स्मृतौ ॥ २६ ॥ विज्ञाय राजा हितदेशकालौ दैवं त्रिकालं च तथैव बुद्ध्वा ॥ यायात्परं कालविदां मतेन संचिन्त्य सार्द्धं द्विजमन्त्रविद्भिः ॥२७॥ इति श्रीमात्स्ये महापुराणे यात्रानिमित्तकालयोग्यचिन्तानाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४०॥छ॥ मनुरुवाच ॥ ब्रूहि मे त्वं निमित्तानि अशुभानि शुभानि च ॥ सर्वधर्मभृतां श्रेष्ठ त्वं हि सर्वविदुच्यसे ॥ १ ॥ मत्स्य उवाच ॥ अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् ॥ अथ शस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥ २ ॥ मनुरुवाच ॥ अङ्गानां स्पन्दनं चैव शुभाशुभविचेष्टितम् ॥ तन्मे विस्तरतो ब्रूहि येन स्यां तद्विदो भुवि ॥ ३ ॥ मत्स्य उवाच ॥ पृथ्वीलाभो भवेन्मूर्ध्नि ललाटे रविनन्दन ॥ स्थानं विवृद्धिमायाति भ्रूनसोः प्रियसङ्गमः ॥ ४ ॥ भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते धनागमः ॥ उत्कण्ठोपगमो मध्ये दृष्टं राजन् विचक्षणैः ॥ ५ ॥ दृग्बन्धने सङ्गरे च जयं शीघ्रमवाप्नुयात्॥ योषिद्भोगोऽपाङ्गदेशे श्रवणान्ते प्रियश्रुतिः॥६॥ नासिकायां प्रीतिसौख्यं प्रजाप्तिरधरोष्ठजे ॥ कण्ठे तु भोगलाभः स्याद्भोगवृद्धिरथांसयोः ॥ ७ ॥ सुहृत्स्नेहश्च बाहुभ्यां हस्ते चैव धनागमः ॥ पृष्ठे पराजयः सद्यो जयो वक्षःस्थले भवेत् ॥ ८ ॥ कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने ॥ स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः ॥ ९ ॥ जानुसन्धौ परैः सन्धिर्बलवद्भिर्भवेन्नृप ॥ दिशैकदेशनाशोऽथ जङ्घाभ्यां रविनन्दन ॥ १० ॥ उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप ॥ सलाभं चाध्वगमनं भवेत्पादतले नृप ॥ ११ ॥

लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणात्तथा ॥ विपर्ययेण विहितः सर्वः स्त्रीणां फलागमः ॥ १२ ॥ अप्रशस्ते तदा वामे त्वप्रशस्तं विशेषतः ॥ दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ॥ १३ ॥ अतोऽन्यथा सिद्धिप्रजल्पनात्तु फलस्य शस्तस्य च निन्दितस्य ॥ आनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन तु तर्पणं स्यात् ॥ १४ ॥ इति श्रीमात्स्ये महापुराणे यात्रानिमितकदेहस्पन्दनं नामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥ मनुरुवाच ॥ स्वप्नाख्यानं कथं देव गमने प्रत्युपस्थिते ॥ दृश्यन्ते विविधाकाराः कथं तेषां फलं भवेत् ॥ १ ॥ मत्स्य उवाच ॥ इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ॥ नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः ॥ २ ॥ चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ॥ मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥ ३ ॥ उच्चात्प्रपतनं चैव दोलारोहणमेव च ॥ अर्जनं पङ्कलोहानां हयानामपि मारणम् ॥४॥ रक्तपुष्पद्रुमाणां च मण्डलस्य तथैव च ॥ वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥५॥ भक्षणं पक्षिमत्स्यानां तैलस्य कृसरस्य च ॥ नर्त्तनं हसनं चैव विवाहो गीतमेव च ॥६॥ तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम् ॥ स्रोतोऽवगाहगमनं स्नानं गोमयवारिणा ॥ ७॥ पङ्कोदकेन च तथा महीतोयेन चाप्यथ ॥ मातुः प्रवेशो जठरे चितारोहणमेव च ॥ ८ ॥ शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ॥ दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥ ९ ॥ देवद्विजातिभूपालगुरूणां क्रोध एव च ॥ आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥१०॥ हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ॥ दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥ ११ ॥ फलापहानिश्च तथा पुष्पहानिस्तथैव च ॥ गृहाणां चैव पातश्च गृहसम्मार्ज्जनं तथा ॥ १२ ॥ क्रीडा पिशाचक्रव्यादवानरर्क्षनरैरपि ॥ परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ॥ १३ ॥ काषायवस्त्रधारित्वं तद्वत् स्त्रीक्रीडनं तथा ॥ स्नेहपानावगाहो च रक्तमाल्यानुलेपनम् ॥१४॥ एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ॥ एषां संकथनं धन्यं भूयः प्रस्वापनं तथा ॥ १५ ॥ कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम् ॥ स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम् ॥१६॥ नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम् ॥स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः॥ १७॥षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ॥ चतुर्थे मासमात्रेण पश्यतो नात्र संशयः ॥ १८ ॥ अरुणोदयवेलायां दशाहेन फलं भवेत् ॥ एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽ

शुभम् ॥ १९॥पश्चाद्दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत् ॥ तस्माच्छोभनके स्वप्ने पश्चात् स्वप्ने न शस्यते ॥ २० ॥ शैलप्रासादनागाश्व वृषभारोहणं हितम् ॥ द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज॥२१॥द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता॥ तथैव बहु शीर्षत्वं फलितोद्भव एव च ॥२२॥ सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ॥ चन्द्रार्कताराग्रहणं परिमार्जनमेव च॥२३॥ शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा ॥ भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया॥२४॥जयो विवादे द्यूते च संग्रामे च तथा द्विज॥भक्षणं चार्द्रमांसानां मत्स्यानां पायसस्य च ॥ २५ ॥ दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ॥ सुरारुधिरमद्यानां पानं क्षीरस्य चाथ वा ॥ २६ ॥ अन्त्रैर्वा वेष्टनं भूमौ निर्मलं गगनं तथा ॥ मुखेन दोहनं शस्तं महिषीणां तथा गवाम् ॥ २७ ॥ सिंहीनां हस्तिनीनां च वडवानां तथैव च ॥प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ॥ २८॥ अम्भसा त्वभिषेकस्तु गवां शृङ्गाश्रितेन वा ॥ चन्द्राद्भ्रष्टेन वा राजन् ज्ञेयो राज्यप्रदो हि सः ॥ २९ ॥ राज्याभिषेकश्च तथा छेदनं शिरसस्तथा ॥ मरणं वह्निदाहश्च वह्निदाहो गृहादिषु ॥ ३० ॥ लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम् ॥ तथोदकानां तरणं तथा विषमलङ्घनम् ॥ ३१ ॥ हस्तिनीवडवानां च गवां च प्रसवो गृहे ॥ आरोहणमथाश्वानां रोदनं च तथा शुभम् ॥ ३२ ॥ वरस्त्रीणां तथा लाभस्तथालिङ्गनमेव च ॥ निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ॥३३॥ जीवतां भूमिपालानां सुहृदामपि दर्शनम् ॥ दर्शनं देवतानां च विमलानां तथाम्भसाम् ॥ ३४॥ शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद्ध्रुवमर्थलाभम् ॥ स्वप्नानि वै धर्मभृतां वरिष्ठ व्याधेर्विमोक्षं च तथातुरोऽपि ॥ ३५ ॥ इति श्रीमात्स्ये महापुराणे यात्रानिमित्ते स्वप्नाध्यायो नाम द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥ छ ॥ मनुरुवाच ॥ गमनं प्रति राज्ञां तु सम्मुखादर्शने च किम् ॥ प्रशस्तांश्चैव सम्भाष्य सर्वानेतांश्च कीर्त्तय ॥ १ ॥ मत्स्य उवाच ॥ औषधानि त्वयुक्तानि धान्यं कृष्णं च यद्भवेत् ॥ कार्पासश्च तृणं राजन् शुष्कं गोमयमेव च ॥ २ ॥ इन्धनं च तथाङ्गारं गुडं तैलं तथाऽशुभम् ॥ अभ्यक्तं मलिनं मुण्डं तथा नग्नं च मानवम् ॥ ३ ॥ मुक्तकेशं रुजार्त्तं च काषायाम्बरधारिणम् ॥ उन्मत्तकं तथा सत्त्वं दीनं चाथ नपुंसकम्॥ ४॥अयःपङ्कस्तथा चर्म्म केशबन्धनमेव च ॥ तथैवोद्धृतसाराणि पिण्याकादीनि यानि च॥५॥ चण्डालश्वपचाश्चैव राजबन्धनपालकाः ॥

